

चौखम्बा-संस्कृत-ग्रन्थमाला ।
( ग्रन्थसंख्या १७ )

---

# प्रकरणपञ्चिका

नाम

## प्रभाकरमतानुसारि—मीमांसादर्शनम् ।

महामहोपाध्यायश्रीशालिकनाथमिश्र-
विरचितम् ।
अड्करोपनामक श्रीमुकुन्दशास्त्रिणा शोधितम् ।



काश्याम् ।

विद्याविलास-नाम्नि यन्त्रालये, हरिदासगुप्तेन
मुद्रयित्वा प्रकाशितम् ।
सन् १९०४ ईस्वी

वैक्रम संवत् १९६१

शुभम् ।

॥ श्रीः ॥

# ॥ विज्ञापनम् ॥

अयि सकलमीमांसारसपिपासवस्तत्रभवन्तो धिषणैकधना धीरवराः। इदं वो विदितमस्तु संप्रति सन्ति नानाविधा मुद्रिता अमुद्रिताश्च जगति लब्धप्रतिष्ठाः परश्शता मीमांसासन्दर्भा भट्ट मतप्रतिपादकाः। किन्तु तत्र गुरुमतस्य पूर्वपक्ष एव विलोक्यते न तु सिद्धान्तः, अत्र महामहोपाध्यायप्रभाकरापरपर्यायगुरुमतस्य राद्धान्तो ऽस्ति, प्रभाकरशिष्यः शालिकनाथ इमं निबन्धं जग्रन्थ सो ऽयं प्रकरणपञ्चिकाऽभिधः प्रबन्धः सर्वांशेनोत्तमतया ऽतीव प्राचीनतया च खण्डितोऽपि लोके प्रकाशमर्हतीति सुविचार्य प्रथमतः ७८ पत्रात्मक एव काशीविद्यासुधानिधिनामके पण्डितपत्रे श्रीमन्महाशयग्रिभिथसाहबानुमत्या विद्वज्जनमनोरञ्जनाय संशोध्य विठ्ठलशास्त्रिणा संमुद्य प्रकाशितः। ततो व्यतीतेषु कतिपयेषु वर्षेषु कस्य चिन्महाराष्ट्रब्राह्मणस्य सद्मनि तस्यैव पुस्तकस्य शततमपत्रमारभ्य षड्विंशतिर्जीर्णानि पत्राणि समुपलभ्य श्री ६ परमगुरुवरबालशास्त्रिचरणैः पण्डितपत्रे संमुद्य प्रकाश्य समाप्तिमनायि लिखितश्चान्तिमे पत्रे समाप्ता चेयं प्रकरणपञ्चिकेति अत एवास्येयत्तापि सम्यगेव निश्चिता, यतो यावत्पर्यन्तं च खण्डितोऽस्ति तत्र पत्रयोरधष्टिप्पणीदानेन विशदीकृतमस्ति। खण्डितोऽपि संस्कृतप्रौढतया ग्रन्थस्यैकस्याध्ययनेन गुरुमतस्य व्यक्तमेव शीघ्रं ज्ञायमानतयाऽवश्यमेव सङ्ग्राह्योऽयं निबन्धराजः सम्प्रति पण्डितपत्रस्य कतिपयभागस्य दुर्लभतया बहुशो ऽन्वेषणेन लब्धे ऽपि परस्परनिरपेक्षनानाग्रन्थकतिपयपत्रसंवलिततया प्रत्यङ्कं तस्य एकग्रन्थस्य कृते ऽनेकग्रन्थसङ्ग्रहप्रयासबाहुल्यं विलोक्य, अल्पेनैव मूल्येन विद्यार्थिजनस्य सौलभ्याय पण्डितपत्रादुद्धृत्य श्रीमन्महामहोपाध्यायचित्रधरमिश्रस्य पुस्तकमेकं प्राप्य, तेन अडकरोपनामकमुकुन्दशास्त्रिद्वारा पुनरपि संशोध्य स्वकीयविद्याविलासनाम्नि यन्त्रालये मुद्रयित्वा प्राकाश्यं नीतः। अत्र कृतेऽपि शोधनप्रयासे दृष्टिदोषात् सीसकाक्षरयोजनादोषाद् वा जातस्खलनं स्वयं संशोध्य सफलयन्तु मत्परिश्रमं महाशया इति करयुगलमुकुलितं विधाय भूयो भूयः प्रणतः प्रार्थयामि श्रीमतो गुणैकपक्षपातिनो धीमतः।

चौखम्बासंस्कृतमासिकपुस्तकाध्यक्षो हरिदासगुप्तः।

21-12-73
श्री



मीमांसादर्शनम् ।

प्रकरणपञ्चिका ।

श्रीमच्छालिकनाथमिश्रविरचिता ।

# श्रीगणेशायनमः ।

स्वाध्यायविधिवाक्यार्थविचारे प्रयतामहे ।
प्रभाकरगुरोर्दृष्ट्या मीमांसारम्भसिद्धये ॥ १ ॥

अत्र केचिदाचक्षते, न मीमांसाशास्त्रमारम्भणीयमिति, तद्धि वेदवाक्यार्थविचारोपायभूतन्यायनिबन्धनं, नच वेदवाक्यार्थो विचार्यो विचारस्य विषयभूतोऽस्ति, नाप्यसौ विचार्य निर्णीतः प्रयोजनमवकल्पतेऽपुरुषार्थत्वात्, पुरुषार्थत्वे हि तस्य नोदनैव प्रमाणं स्यात् । नचाविवक्षितार्था सा प्रमाणं भवितुमर्हति । ननु शब्दानामौत्पत्तिकत्वादर्थपरत्वेऽस्य नाऽविवक्षितार्थता युक्ता ? सत्यमेवं वेदेनैव त्वन्यपरतामवगमयता ऽविवक्षितार्थता ऽऽपाद्यमाना न शक्या वारयितुं, तथाहि, स्वाध्यायोऽध्येतव्य इति परप्रेरणात्मकविध्यवरुद्धा भावना तव्यप्रत्ययवाच्या प्रतीयते, साच स्वभावतो भाव्यं करणमितिकर्तव्यताञ्चापेक्षते, तत्र न तावदध्ययनमेव समानपदोपात्तं भाव्यतया सम्बन्धमर्हति, अपुरुषार्थत्वात्, तस्मिन्हि भाव्यतया स्वीक्रियमाणे पुरुषप्रवृत्त्यनुपपत्तेः, परप्रेरणात्मकविधिव्यापारभङ्गप्रसङ्गात् । नाप्येकवाक्यतया समभिव्याह्रियमाणस्य स्वाध्यायस्य भाव्यतया सम्बन्धोऽवकल्पते, विध्यानर्थक्य

विधि शब्द
सत्री स्या।

प्रसङ्गात्, अन्तरेणापि हि विधिं प्रतीयतएवाध्ययनेन स्वाध्यायोऽवाप्यतइति । नच व्रीहीनवहन्तीतिवन्नियमार्थो विधिरिति शक्यते वक्तुम्, अक्रत्वर्थत्वादध्ययनस्य; न खल्वध्ययनस्य क्रत्वर्थत्वे किंचन प्रमाणमस्ति, अक्रत्वर्थश्च न नियमस्य विषयः । अवघातादयो हि क्रतावेव नियम्यन्ते न तण्डुलादिस्वरूपे । अवघातेनैव सम्पादितैस्तन्दुलैः क्रतुफलभावनासिद्धिरिति प्रमाणान्तरस्याविषयत्वात्तेनैव सिद्धिरिति न किंचिद्विरुद्धं । स्वाध्यायस्वरूपग्रहणं त्वध्ययनेनैव सिध्यतीति नियम्यमानं मानान्तरविरुद्धं स्वयमनधीयमानस्यापि परपुरुषाधीयमानस्याध्यायग्रहणदर्शनात् । नचाध्ययनस्वीकृतेनैव स्वाध्यायेन क्रतुफलभावनासिद्धिरिति, अक्रत्वर्थतया क्रतुसंस्पर्शाभावेन नियमानुपपत्तेरिति ।

एतेनैवार्थावबोधस्यापि भाव्यतया सम्बन्धो निरस्तो वेदितव्यः । तथा हि, यद्यप्यधीतात्स्वाध्यायात्फलवत्कर्मविबोधो दृश्यतइति तस्यैव भाव्यता ऽवसीयते तथापि विनापि विधिनाऽन्वयव्यतिरेकाभ्यामध्ययनस्यार्थावबोधसाधनत्वावगमाद्विधिरनर्थक एव । न चाध्ययनेनैवार्थावबोधो भावयितव्य इति नियमविधेरर्थवत्ता, प्रकारान्तरेणापि तत्संभवान्नियमानुपपत्तेः । नचाध्ययनेनैवार्थमवबुध्यानुतिष्ठतां क्रतुफलभावनासिद्धिरिति नियमः संभवति, अक्रत्वर्थत्वादध्ययनस्य । तस्माद्विश्वजिन्न्यायेन स्वर्ग एव भाव्यतया कल्पयितव्ये प्राप्ते फलभावेऽयो निर्देशादित्यार्थवादिकमधुघृतकुल्यादि—तृप्तपित्रादिप्रसादलभ्यसर्वकामफलावाप्तिरेव भाव्यतया ऽवसीयते । नन्वाद्याध्ययने न किंचिदार्थवादिकं फलं श्रूयते, तत्रैषामर्थवादानामश्रवणात्, धारणजपयज्ञविध्यर्थवादा ह्येते,

तदाहुर्वार्तिककारमिश्राः ।

"आद्ये त्वध्ययने नैव काचिदस्ति फलश्रुतिः ।
धारणे जपयज्ञे च या सा ऽप्येवं निवारिता" ॥

इति । सत्यमेवं, तथापि तेषामतिदेशतोऽपि लब्धेर्युक्तैव तदीयफलस्य भाव्यता, तथाहि लिङादियुक्तेषु वाक्येषुद्वे भावनेऽवगम्येते शब्दभावनाऽर्थभावना चेति । तत्र शब्दभावना परप्रेरणात्मिका तस्याः पुरुषप्रवृत्तिर्भाव्या, तया च प्रेरणाया सह यो लिङादीनां वाच्यवाचकभावः सम्बन्धः स तत्र योग्यतया करणं, तदाहुर्वार्तिककार मिश्राः; "लिङादयो हि प्रेरणां कुर्वन्त्यभिदधति चेति" प्रवृत्त्युत्पादनयोग्यतया चार्थवादिकी स्तुतिरितिकर्तव्यता । तदेवमध्ययनविधौ साक्षादश्रुतार्थवादके शब्दभावनायामितिकर्तव्यताभूतार्थवादकाङ्क्षिण्यां जपयज्ञाऽध्ययनातिदेशेनाऽर्थवादाः स्वीक्रियन्ते । तदाहुर्वार्तिककार मिश्राः "अनुषङ्गानुमानाद्यैर्लभ्यन्ते ऽन्ये ऽतिदेशत इति" ते चातिदिष्टा अर्थवादा अर्थभावनायां फलं समर्पयन्ति रात्रिसत्रवत्, एवमार्थवादिके फले भाव्यतया ऽवस्थिते ऽध्ययनं समानपदोपात्तं करणाकाङ्क्षापरिपूरकत्वेन समर्प्यते । एवञ्च यदेकस्मादपूर्वं तदेतरत्तदर्थमितिन्यायेन स्वाध्यायशब्दवाच्यो ऽक्षरराशिरप्यध्ययननिर्वृत्त्यर्थ एवावसीयते । एवञ्चान्यपरत्वादक्षराणां तेभ्योऽर्थ प्रतिपत्तिरेवानुपपन्ना, व्युत्पत्तिविरहात्, वृद्धव्यवहारे ह्यनन्यपराण्येवाक्षराण्यर्थाववोधकतया व्युत्पन्नानि, व्युत्पत्त्यपेक्षश्च शब्दो ऽर्थाववोधकः । यः पुनरन्यपरेभ्यो ऽप्यक्षरेभ्यो ऽर्थावगमः स सामान्यतोदृष्टनिवन्धनान्यपरत्वभ्रान्त्या भ्रान्तिरेवेति मन्तव्यम् । अप्रतीयमानश्चार्थो न विचारस्य विषयः नापि प्रयोजनमिति विचारस्तावन्नारब्धव्यः, तदनारम्भे च तदुपायभूतन्यायपरिज्ञानमप्यनुपयोगि तदनुपयोगे च तन्निब-

न्धनं मीमांसाशास्त्रमनारम्भणीयमिति पूर्वः पक्षः ॥ १

राद्धान्तस्तु । स्वाध्यायो ऽध्येतव्य इति स्वाध्यायस्य कर्मत्वावगमात्स एव भाव्यतया ऽवसीयते, यद्यपि निसत्त्वान्निर्वर्त्यकर्मता नास्ति स्वाध्यायस्य विकार्यकर्मता वा, अध्ययनेन तस्य विकारानुपपत्तेः तथापि प्राप्यतया तस्य कर्मता नानुपपन्ना, अतएव प्राप्यकर्मोदाहरणं वृत्तिकारस्य वेदाध्ययनं, यच्च कर्म तदर्थैव क्रिया युक्ता, सो ऽयं श्रौतो विनियोगः, नच स्वाध्यायस्य सक्तुवच्छेषित्वमनुपपन्नं ? फलवदर्थावबोधोपयोगित्वात् । यद्यपि चार्थावबोधोपयोगित्वमध्ययनात्प्राङ्नावगम्यते तथापि पश्चाद्भाव्यपि भवत्येव प्रयोजनं भाविनापि चोपयोगेन शेषित्वं नानुपपन्नम् अग्निवत् । उत्पन्नानां ह्यग्नीनां विनियोगावगमो नावगतविनियोगानामुत्पत्तिः आहवनीयादिशब्दानामलौकिकार्थतया प्राग्व्युत्पत्त्यवगमादर्थानवगतेः होमादिषु विनियोगासंभवात्, तथा चोक्तम् "भूतभाव्युपयोगं हि द्रव्यं संस्कारमर्हति" ननु चार्थावबोधोपयोगितया संस्कारविधिरनर्थक एवेत्युक्तं ? नानर्थको नियमार्थतया ऽर्थवत्त्वात्, ननु च नियमो न सम्भवति अक्रतुसंस्पर्शित्वादित्युक्तं, न, सम्भवति स्वाभाविकार्थपरत्वानुसारेण क्रत्वनुप्रवेशे तुल्यतायाा एवोचितत्वात्, यदि खल्वध्ययनविधेः क्रत्वनुप्रवेशिता नाश्रीयते तदा शब्दानां वृद्धव्यवहारव्युत्पन्नानां स्वाभाविकार्थपरता हीयेत, जहत्स्वार्थत्वं च न न्याय्यमिति क्रतुफलभावनानुप्रवेश्यैवाध्ययनसंस्कारो युक्तः, तत्र कर्मविधिष्वेव नियमवर्णना अध्ययनाविर्भाविवितैरेव कर्मविधिभिरर्थमवबुध्यानुतिष्ठतां क्रतुफलभावनासिद्धिरिति, अर्थवादेषु त्वध्ययनाविर्भावितार्थवादप्ररोचिताः क्रियमाणाः क्रतवः फलभावनाया अलमिति । मन्त्रेषु पुनरध्ययनपरिगृही-

तैरेव मन्त्रैः क्रतुषु स्मरणीयपदार्थस्मरणं फलभावनानुगुणमिति, अध्ययननियमाश्रितश्च कालनियमो व्रतादिनियमश्च ।

"श्रावण्यां प्रौष्ठपद्यां वा उपाकृत्य यथाविधि, ।
युक्तश्छंदांस्यधीयीत मासान्विप्रोऽर्धपञ्चमान् ॥
भवत्पूर्वं चरेद्भैक्षमुपनीतो द्विजोत्तमः ।
भवन्मध्यं तु राजन्यो वैश्यस्तु भवदुत्तरमि"ति ॥

एवञ्चान्यपरत्वादक्षराणां फलवत्कर्मावबोधोत्पत्तेर्विचारस्य विषयप्रयोजनलाभाच्छास्त्रस्यारम्भणीयत्वं विषयप्रयोजनलाभे च विचारस्याध्ययनानन्तरमुपनिपातितत्वाद् गुरुकुलस्थितेरर्थवत्त्वात्तन्निवृत्तिमध्ययनानन्तरमाप्तां स्मरद्वेदमधीत्य स्नायादिति स्मृतिवचनमपन्यायमूलं दर्शयन्नर्थावबोधपरतया स्वाध्यायस्य विवक्षितार्थतां मन्यमानः सूत्रकारो विचारस्य विषयं प्रयोजनं चाह "अथातो धर्मजिज्ञासे"ति । एतच्च व्याख्यातम् ।

अथातो धर्मजिज्ञासासूत्रमाद्यमिदं कृतम्, ।
धर्माख्यं विषयं वक्तुं मीमांसायाः प्रयोजनमि"ति ।

तदयुक्तम् । न हि लिङादियुक्तवाक्येषु भावना भाव्यान्तरमपेक्षते अपूर्वस्य भाव्यस्य स्वशब्देनाभिहितत्वात्, लिङादयो हि भाव्यकोटिनिविष्टप्रधानभूतापूर्वोपसर्जनतापन्नामेव भावनामभिदधतीति विषयकरणीये निपुणतरमुपपादितम्, अतो न पूर्वपक्षे भाव्याकाङ्क्षायामार्थवादिकफलसम्बन्धः । नापि सिद्धान्ते स्वाध्यायस्य साध्यतयान्वयः कथं तर्हि विश्वजिदादिषु स्वर्गादिफलकल्पनं, यथा तत्तथा निशम्यतां, यदपूर्वं कार्यभूतं प्रतीयते तद्विषयत्वेन सम्बन्धप्रकरणीभूतयागाद्यनुष्ठानाधीनात्मलाभं, नच विना कर्त्रा तदनुष्ठानोपपत्तिः ?

नचाधिकारं विना कर्तृत्वलाभः ? नच नियोज्यमन्तरेणाधिकारसिद्धिः ? न वार्थविशिष्टो नियोज्यो ऽवकल्पतइति विशेषणभावेन स्वर्गकामना परिकल्पते, स्वर्गकामना चेन्नियोज्यविशेषणं ततोऽग्निहोत्रादिवत् स्वर्गस्यापि नियोगतः सिद्धिरिति। भवत्वेवम् अत्रापि तर्हि नियोज्यविशेषणतयैवार्थवादिकं फलं रात्रिसत्रवत्सम्बध्यतां ? न। अन्यतोऽनुष्ठानसिद्धेः, कुतोऽन्यतः ? आचार्यकरणविधिप्रयुक्तेः, कः पुनराचार्यकरणविधिः ?

"उपनीय तु यः शिष्यं वेदमध्यापयेत् द्विजः ।
सकल्पं सरहस्यं च तमाचार्यं प्रचक्षते" ॥

इति स्मरणानुमितः शिष्यमुपनीय वेदाध्यापनेनाचार्यकं भावयेदित्येवं रूपः, अलौकिकं चाहवनीयादिवदाचार्यकमिति तन्निष्पत्त्युपायविधानं युक्तमेव, तत्रार्थादाचार्यो बुभूषत एवाधिकारो धनार्जननियमवत्, तत्र शिष्यं प्रति विहितहिताचरणदक्षिणादानदर्शनात्तल्लिप्सोरेवाचार्यभवनेच्छा यथा दीक्षणीयया दीक्षितत्वसिद्धिः । तथा वेदाध्यापनेनाचार्यत्वसिद्धिः। उपनयनं च त्काप्रसेयनाध्यापनसमानकर्तृकमवगम्यमानमेकप्रयोगतया विना समानकर्तृकत्वासंभवादङ्गाङ्गिभावेन च विना एकप्रयोगत्वानुपपत्तेराचार्यकभावनाकरणीभूतमध्यापनं प्रत्यङ्गत्वेनावतिष्ठते। तदाश्रितश्चाष्टवर्षं ब्राह्मणमुपनयीतेत्यादिनियमः, उपनयनं च स्वभावत उपनेयासत्तिप्रयोजनकमिति तद्द्वारेणैव तस्याङ्गत्वं, न चाध्यापनं प्रत्यनुपयोगि न उपनेयस्यासत्तिरध्यापनोपयोगिनीत्युपनेयस्य कर्मापेक्षायामुपनयनं प्रक्रम्य स्वाध्यायोऽध्येतव्य इत्यध्ययनं विधीयमानमुपनेयस्य कर्मेत्यवगम्यते, अध्ययनं चाध्यापनोपयोगीति सिद्धमेतत्। तेनायमध्येष्यमाणस्य माणवकस्योपनयनमध्यापना-

ङ्गमिसध्यापनविधिः स्वाङ्गभूतमुपनयनं प्रयुञ्जानस्तस्यान्यथानुपपत्त्याऽध्ययनमपि प्रयुङ्क्ते । तत्प्रयुक्ताध्ययननिष्पत्त्या च लब्धसिद्धिरध्ययननियोगो नाधिकारान्तरमपेक्षते, अतो नायं विश्वजिन्न्यायस्य विषयः, नापि रात्रिसत्रन्यायस्य, अनन्यप्रयुक्तविषयनियोगगोचरत्वात्तयोः, अत एव प्रयाजादिनियोगेषु तयोरनवसरः । सिद्धान्ते तु कामश्रुतिप्रयुक्तमध्ययनमिति विद्यासाध्येष्वपि कर्मसु शूद्रादीनामधिकारः स्यात्, अतो ऽध्यापनविधिप्रयुक्तत्वादध्ययनस्य येषामेवोपनयनं तेषामेव तत्प्रयुक्तमन्त्रलाभाच्छूद्रादीनामनधिकारः । एवञ्च विध्यन्तरप्रयुक्ते ऽध्ययने न रात्रिसत्रन्यायेन पूर्वपक्षाशङ्कोचिता । नचातत्प्रयुक्त्या पूर्वः पक्षः । तत्प्रयुक्त्या च राद्धान्त इति युक्तं ? अतत्प्रयुक्तत्वे कारणाभावात् । यच्चोक्तं नियमार्थो विधिरिति; तदयुक्तं । स्वाध्यायाध्ययनस्य नियोगनिष्पत्त्यर्थतया विधानेन वचनस्यार्थवत्त्वात् । स्वाध्यायो ऽध्येतव्य इति तव्यप्रत्ययेन विधिरभिधीयते, नचावहन्त्यादिष्विव क्रतुविषयनियोगानुवादो ऽयमत्रकल्पते ? असंनिधानात् क्रतुनियोगानां । सन्निधानवशेनैव प्रकृतनियोगप्रत्यभिज्ञानात्तत्र क्रतुनियोगानुवादोपगमः; न चेह सन्निधानमस्ति, नापि पर्णमयी जुहूर्भवतीतिवत् पदार्थसम्बन्धमुखेन क्रतुविनियोगप्रत्यभिज्ञानं ? स्वाध्यायस्य व्यभिचरितक्रतुसम्बन्धत्वात्, हुमिसेत्रमादीनामनर्थकानां स्वाध्यायान्तर्गतिदर्शनात् । यत एवात्र नियोगः साध्यतयाऽवगम्यते अत एव स्वाध्यायस्य नेप्सितकर्मतया सम्बन्धोऽवकल्पते ? एकस्मिन् वाक्ये साध्यद्वयविरोधात् । नच स्वर्गादिवत् स्वाध्यायस्य नियोज्यविशेषणतयाऽन्वयादविरोधः ? अनियोगफलत्वात्स्वाध्यायग्रहणस्य, यदेव हि नैयोगिकं फलं तदेव

साध्यतया नियोज्यविशेषणं नान्यदिति तृतीये दर्शितम् " अनभिज्ञो भवान्विषयनियोज्यानामि " त्यत्र, अतोऽध्ययनविषयनियोगप्रतिपादनेनैव तस्यार्थवत्त्वान्न क्रतुप्रवेशकल्पनया नियमार्थता विधेः ।

अन्ये पुनरेवं पूर्वपक्षयन्ति; अध्यापनविधिप्रयुक्तमध्ययनमध्यापनाङ्गभूतं तन्निष्पत्त्यर्थतया च स्वाध्यायस्यान्यपरत्वादविवक्षितार्थतेति, तदयुक्तं, प्रयुक्तिमात्रेण तादर्थ्यानुपपत्तेः । स्यान्मतं; यथा प्रजापतिव्रतेषु स्वतन्त्रकर्त्रवगमात्तद्धेतुभूताधिकारसिद्ध्यर्थं नियोज्यपरिकल्पनं तथा प्रयुक्तिदर्शनात्तादर्थ्यमिति । तन्न । प्रयुक्तेस्तादर्थ्यव्यभिचारात् । असत्यपि तादर्थ्ये केवलोपकारकतामात्रेणाध्ययनस्य क्रतुविधिभिः प्रयुज्यमानत्वात् । कथं तर्हि पश्वेकत्वादीनामङ्गत्वं ? न तावद्विभक्तिरेव क्रतुसम्बन्धितयैकत्वमभिधत्ते येनारुण्यवद्वाक्येन विनियोगः स्यात् ? विभक्तयो हि प्रातिपदिकार्थगतमेव स्वार्थं श्रुत्याभिदधति, नापि करणभूतस्यैकत्वमुच्यते संख्यान्वितस्य वा करणत्वं ? करणत्वैकत्वयोर्युगपदभिधानात्, अतो न वैनियोगिकं शेषत्वं विभक्त्यभिहितायाः संख्यायाः । उच्यते च शेषत्वं तच्च प्रयुक्तिकृतमेव, मैवं, न तत्रापि शेषत्वमौपादानिकं किन्तु लौकिकमेकवस्तुसामर्थ्यमेव लिङ्गमुच्यते, संख्या च स्वभावत एव संख्येयावच्छेदिकेति संख्येयार्थैव, किं तु संख्येयभूतप्रातिपदिकार्थमात्रसम्बन्धे ग्राहकान्वयव्याघातापत्तेर्ग्राहकीयभूतपश्वादिसम्बन्ध औपादानिकः, सन्निधिसमाम्नानमात्रेण हि विभक्त्यर्थस्यापि ग्राहकं प्रत्यैदमर्थ्येनान्वितस्यैवाभिधानं, तदन्यथानुपपत्त्या च केवलाभिधाननिबन्धनं स्वरूपसम्बन्धमतिलङ्घ्य साधनीभूतसंख्येयसम्बन्धाध्यवसानमिति नौपादा-

निकं तत्रापि शेषत्वं । भवतु तर्हि लिङ्गादेवाध्ययनस्यापि अध्यापने विनियोगः । नैवं भवितुमर्हति सामान्यसम्बन्धसापेक्षत्वाल्लिङ्गविनियोगस्य न चास्य सामान्यसम्बन्धापादकं किञ्चिदस्ति प्रमाणं, ननु णिच्छ्रुतिः प्रकृत्यर्थभूतस्याध्ययनस्य शेषतामापादयतीति, तन्न, प्रयोजकव्यापारस्य प्रयोज्यव्यवहारोत्पत्तिहेतुत्वाद्विपरीतशेषत्वापत्तेः, वाक्यप्रकरणस्थानसमाख्यानानि त्वध्ययनस्याध्यापनं प्रति विनियोजकतया नाशङ्कनीयान्येव । ग्रन्थविरोधश्चाङ्गत्ववादिनां; यत एवमाह भगवान् " प्रयोज्यत्वादनङ्गत्वाच्च भवति संशय " इति ॥

तस्मादनङ्गतयैव पूर्वपक्षणीयं, कथं पुनरनङ्गतया पूर्वपक्षयितुं शक्यते ?, उच्यते, सर्वो हि विधिरधिकारपर्यवसायी, न चाध्ययनविधौ कस्य चिदधिकारोऽस्तीत्युक्तमेव साक्षादश्रवणात्, अध्यापनविधिप्रयोज्यतया कल्पनानुपपत्तेः, तत्र य एवासौ प्रयोजकविधावधिकारः स एव प्रयोजनमिति युक्तम् प्रथमोपनिपातित्वात्, यदपि यस्यानङ्गं तदपि तस्य प्रयोजनं भवत्येव आधानस्येव होमादय इति । ननु चानन्तरभाविकर्मवबोधफलकतया अध्ययनस्याध्येतुरेवाधिकारोऽध्ययने प्रतीयते इति तत्प्रयोजनतैव स्वाध्यायविधेर्युक्ता अन्तरङ्गत्वात्, न, तस्योत्तरकालभावित्वात्, तुल्यायां हि प्राप्तावन्तरङ्गता बलीयसी, न चानयोरधिकारयोस्तुल्या प्राप्तिः ? प्रथमोपनिपातित्वात्प्रयोजकविध्यधिकारस्य उत्तरकालभावित्वाच्चार्थावबोधनिबन्धनस्याधिकारस्य, यदा चाध्यापनविध्यधिकारसिद्धिरध्ययनस्य प्रयोजनमित्यध्ययनविधिना वोधितं तदा ऽध्ययननिष्पत्त्यर्थत्वात्स्वाध्यायस्यान्यपरत्वादविवक्षितार्थत्वम् । अविवक्षितश्चार्थो न विचारणीय इति वेदाध्ययनमात्रेणैव गु-

रुकुलस्थितेः कृतार्थत्वादध्ययनोत्तरकालं गुरुकुलनिवृत्तिरेव युक्तेति मत्वा स्मृतं वेदमधीत्य स्नायादिति। अत्र च न स्नान मदृष्टार्थं विधीयते किन्तु यो "ब्रह्मचारिणो न स्नायादिति" अस्नाननियमस्तस्य पर्यवसानमेतदध्ययनाङ्गतया नियमानां तन्निवृत्तौ प्राप्तमुच्यते। अस्नाननियमतुल्यतया च गुरुकुलवासादीनामपि निवृत्तिः प्राप्तैवेति सकलब्रह्मचारिधर्मनिवृत्तिरेवाध्ययनानन्तरमुच्यते। एवं चाध्ययनविधिना विचारस्यानाक्षिप्तत्वात्तदुपायभूतन्यायनिबन्धनं मीमांसाशास्त्रं नारम्भणीयमिति पूर्वः पक्षः।

राद्धान्तस्तु। यद्यपि प्रयोजकविध्यधिकारः प्रथमभावी तथापि तन्निष्पत्तिः प्रयोजनमिति न युक्तं किन्तु दृष्टार्थावबोधफलकतयाऽध्ययनोत्तरकालभाव्यप्यध्येतुरेवाधिकारः प्रयोजनतया युक्त आश्रयितुं कर्तृसमवायित्वात्। यत्कर्तृकं हि यत्कर्म तस्यैव तत्रैश्वर्यमिति युक्तम्, अन्तरङ्गत्वात्, नच सहसैव विधिदर्शनादत्राधिकारपर्यवसानकल्पनाकरणमस्ति? पर प्रयुक्त्यैवात्रानुष्ठानस्य सिद्धत्वात्। यत्र खल्वधिकारपर्यवसानकल्पनामन्तरेण प्रागनुष्ठानं न लभ्यते तत्रानुष्ठानात्प्रागनवगतोऽधिकारः तदनुप्रवेशात्साध्यः; इह त्वध्यापनविधिप्रयुक्त्यैवात्राधिकारपर्यवसानकल्पनामन्तरेणानुष्ठानं लब्धमिति प्राथम्यमकिञ्चित्करम्। अन्तरङ्गत्वादध्येतुरेवाधिकारो युक्त इति। तदेवमध्ययनविधेरन्यप्रयुक्त्यैवानुष्ठानसिद्धेर्नियोज्यो नास्ति अधिकारी तु विद्यतएव, यदर्थं हि यत्कर्म स तत्राधिकारी। अर्थावबोधोपयोगेन चाध्येत्रर्थता ऽध्ययनस्येति स तत्राधिकारी, स चायमधिकारः प्रागध्ययनान्नावगम्यते अध्ययनोत्तरकाले चावगम्यते, स्वाध्यायाध्ययनं त्वेवमभिनिर्वर्त्तते।

" श्रावण्यां प्रौष्ठपद्यां वा उपाकृत्य यथाविधि, ।
युक्तश्छन्दांस्यधीयीत मासान्विप्रोऽर्धपञ्चमान्, ॥
ततः परं तु छन्दांसि शुक्लेषु नियतः पठेत्, ।
वेदाङ्गानि रहस्यं च कृष्णपक्षेषु सम्पठेत् " ॥

इति, इत्थं चाध्ययने क्रियमाणे ऽङ्गाध्ययनसंस्कृतस्य वेदवाक्यादर्थावगमो जायते, इदानीमध्येता मन्यते मदुपयोगिकर्मावबोधकतया मदर्थमध्ययनमिति । सो ऽयं वेदाध्ययनमीमांसाश्रवणयोर्मध्येऽधिकारः सो ऽयं तात्कालिकः शास्त्रार्थः, इदमेव तावदधिकारमालोच्य पित्रादयो ऽर्थदानादिना कांश्चिदानमय्य पुत्रादीनुपनाययन्ति, प्रबुद्धाश्च केचन स्वयमेवात्मानम्; अन्यथाऽध्ययनासंभवात्, अनुपनीतस्याध्ययननिषेधात्, ।

" नाभिव्याहारयेद् ब्रह्म स्वधानिनयनादृते, ।
स शूद्रेण समस्तावद्यावद्वेदान्न जायते " ॥

इति । एवं तावदध्यापनविधिं स्मृत्यनुमितं कस्य चिदप्यस्वाध्यायभूतमाश्रित्य राद्धान्तवर्णना कृता ।

अन्येतु साक्षाच्छ्रुताध्यापनविध्यनुसारेणैवमाहुः । यद्यध्यापनविध्यधिकारप्रयोजनता स्वाध्यायाध्ययनविधेः स्यात् तदा ऽध्यापनविधेरपि स्वाध्यायान्तर्गतत्वाद‌विवक्षितार्थत्वेन तत्प्रयुक्ततापि न सम्भवति, स्वशाखादि स्वाध्यायशब्देनोच्यते साक्षादधीतश्चाध्यापनविधिर्नूनं केषां चिच्छाखिनां स्वशाखान्तर्गतो भवेदिति स्वाध्यायस्याविवक्षितार्थत्वेन तस्याप्यविवक्षितार्थत्वान्न प्रयोजकत्वमवकल्पते इति पश्चाद्वाक्यार्थावबोधोपयोगितया ऽध्येतुरेवाधिकारो ऽध्ययनविधेः प्रयोजनमिति ।

ननु स्वाध्यायो ऽध्येतव्य इति नियोगसिद्धेरवगमात्तन्नि-

ष्पत्त्यर्थत्वादध्यापनस्यान्यपरत्वादर्थविवक्षा दुर्भणैव, मैवं, यदि केवलं नियोगनिष्पत्त्यर्थतैवाध्ययनस्य स्यात्स्यादेतदेवं, यदा त्वर्थावबोधोऽपि प्रयोजनतया स्वीक्रियते तदार्थपरताऽप्यस्तीति नाविवक्षितार्थता, कथं पुनरेकस्मिन्वाक्ये प्रयोजनद्वयम्? उच्यते, शाब्दं नियोगनिष्पत्तिरेव प्रयोजनम्, आर्थं त्वर्थावबोधनमिति न विरोधः। यच्च तदर्थावबोधाख्यं प्रयोजनं तन्न केवलाध्ययनसाध्यमिति अध्ययनविधिरेव स्वप्रयोजनसिद्धये विचारमाक्षिपति, विचारस्य च न्यायनिबन्धनत्वान्न्यायानां मीमांसाज्ञानगम्यत्वात्मीमांसाज्ञानस्य गुर्वायत्तत्वान्न वेदाध्ययनानन्तरं गुरुकुलान्निवर्तितव्यमिति मन्यमानो भगवान्सूत्रकारः पूर्वपक्षनयमूलतां स्मृतेर्दर्शयितुं धर्मजिज्ञासोपदेशमुखेनाध्ययनानन्तरभाविनीं गुरुकुलनिवृत्तिं प्रतिषेधन्निदमाह "अथातो धर्मजिज्ञासा" इति। वेदवाक्यार्थविचारविरोधिनी च गुरुकुलनिवृत्तिरेव केवला निवार्यते न सकलेतरभिक्षाचरणब्रह्मचर्यादिधर्मनिवृत्तिः, असमाप्तसकलब्रह्मचारिनियमश्च न स्नातकइति न दाराधिगमनेऽधिक्रियते स्नातकस्य दाराधिगमस्मरणात् "स्नातकः सदृशीं भार्यां विन्देदि"ति, तस्माद् गुरुकुले स्थित्वा सकलेतरब्रह्मचारिधर्मान्परित्यज्य वेदार्थो विचारयितव्यः, अविचारितस्यानिर्णीयमानत्वात्, अनिर्णीतवेदार्थश्चेद् गुरुकुलान्निवर्तेत ततः कृतदारसंग्रहः श्रौताग्निहोत्रादिनित्यनैमित्तिकधर्माधिकारापातात्तदनुष्ठानं कर्तुमसमर्थः प्रत्यवेयात्, तस्मादध्ययनस्यानन्तरमेव वेदार्थो विचारयितव्य इति विचारोपायभूतन्यायनिबन्धनं मीमांसाशास्त्रमारब्धव्यमिति सिद्धम्।

शास्त्रमुखं नाम गुरोराविष्कर्तुं गभीरमपि भावम्।
शालिकनाथेन कृतं प्रकरणमेतत्प्रसन्नतरम्॥ १॥

इति प्रकरणपञ्चिकायां शास्त्रमुखं नाम प्रथमं प्रकरणम्।

## नीतिपथो नाम द्वितीयं प्रकरणम् ।

अर्थासंस्पर्शिताशङ्का यथा शब्दस्य वार्यते ।
प्रभाकरगुरोः शिष्यैस्तथा यत्नो विधीयते ॥ १ ॥
अत्र लौकिकवाक्यानां व्यभिचाराभिमानतः ।
अर्थासंस्पर्शितां केचिदाहुः शब्दस्य वादिनः ॥ २ ॥
निश्चयोऽर्थस्य संस्पर्शः स चार्थाव्यभिचारिणः ।
प्रत्यक्षादेरेव भवेच्छब्दस्तु व्यभिचारवान् ॥ ३ ॥
विनाप्यर्थं हि शब्देन प्रतीतिरुपजायते ।
अङ्गुल्यग्रेऽस्ति करिणां यूथमित्येवमादिना ॥ ४ ॥
नचात्र शक्यते वक्तुं शुक्तौ रजतबोधवत् ।
अग्रहाद् भ्रान्तिरेषेति कारणस्याविशेषतः ॥ ५ ॥
दुष्टा हि हेतवः कार्यं सम्पूर्णं कर्तुमक्षमाः ।
तेन भेदाऽग्रहो युक्तः शुक्तिकारजतादिषु ॥ ६ ॥
इह तु ज्ञानहेतुर्यः शब्दः स न विशिष्यते ।
विशिष्यते यस्तु वक्ता स ज्ञानस्य न कारणम् ॥७॥
वक्तापि यदि विज्ञानहेतुः स्यादिन्द्रियादिवत् ।
ततस्तस्याऽपि दोषेण भवेदग्रहणं तदा ॥ ८ ॥
वक्ता तु केवलं शब्दव्यक्तावेवोपयुज्यते ।
ज्ञानं तु शब्दमात्रेण निरपेक्षेण जन्यते ॥ ९ ॥
न च तस्येह दुष्टत्वं किंचिदप्युपलभ्यते ।
दोषश्चाग्रहणे हेतुस्तदभावे स्फुटो ग्रहः ॥ १० ॥
तेन शब्दोपजनितं ज्ञानमेवेदमीदृशम् ।
अर्थं व्यतिक्रामतीति कुतस्तेनार्थनिश्चयः ॥ ११ ॥
येनापि हि विना यस्य सद्भाव उपपद्यते ।
निश्चयस्तत्र तेनेति सुभाषितमिदं वचः ॥ १२ ॥

नन्वेवमाप्तवाक्येभ्यः कथं व्यवहृतिर्भवेत् ।
व्यवहारो हि लोकस्य कथं स्यान्निश्चयं विना ॥१३॥
उच्यते व्यवहारो हि संदेहादपि लौकिकः ।
प्रायशो दृश्यते तेन न किंचिदिह दुष्यति ॥ १४ ॥
अपि चाप्तत्वमालोच्य वक्तुस्तत्रार्थनिश्चयः ।
मानान्तरवशेनापि कथं चिदुपपद्यते ॥ १५ ॥
वेदस्त्वलौकिकार्थत्वादभावाद्वक्तुरेव च ।
अहो बत दशां कष्टामुपनीतोऽपि पण्डितैः ॥ १६ ॥
अत्र प्रतिविधानाय यतन्ते मतिशालिनः ।
ज्ञानस्य व्यभिचारित्वं नयवीथ्यां निवारितम् ॥१७॥
श्रुयतामवधानेन गतिर्नरगिरामपि ।
अनुमानात्पृथग्भावं तासां नेच्छन्ति सूरयः ॥१८॥
वाक्यं हि पुरुषाधीनरचनं लौकिकं सदा ।
शङ्क्यमानायथार्थत्वं नार्थनिश्चायकं स्वतः ॥ १९ ॥
अन्योन्यानन्वितार्थानि पदान्यपि हि मानवाः ।
रचयन्तो विलोक्यन्ते तेन नान्वयनिश्चयः ॥ २० ॥
केचित्तावद् भ्रमेणात्र केचिदाशयदोषतः ।
प्रमादात्के ऽप्यशक्तेश्च के ऽप्यनन्वितवादिनः ॥२१॥
तदुक्तानां पदार्थानां यद्यप्यन्वययोग्यता ।
तथाप्यनन्वितस्यापि दृष्टेर्नान्वयनिश्चयः ॥ २२ ॥
तत्र निश्चयशब्देन ज्ञानमेवाभिधीयते ।
अन्वयानिश्चये तेन ज्ञानमेवास्ति नान्वये ॥ २३ ॥
शङ्क्यमानायथार्थत्वरचनं तेन पुंवचः ।
श्रुतमात्रकमेवार्थे न तावन्निश्चयावहम् ॥ २४ ॥
यावद्वक्तुरविज्ञातं पूर्वभाविप्रमान्तरम् ।

विवक्षितार्थविषयमिन्द्रियार्थनिबन्धनम् ॥ २५ ॥
तस्य ज्ञानं च वाक्येन लिङ्गभूतेन गम्यते ।
ज्ञात्वैवार्थं ब्रवीतीति य एवमवधारितः ॥२६॥
तस्य ज्ञानेन नियतं वाक्यं ज्ञानानुमापकम् ।
ज्ञानं चार्थाविनाभावि तेनार्थे ऽपि विनिश्चयः ॥२७॥
ततोऽर्थे निश्चिते पश्चात्सो ऽर्थो वाक्येन गम्यते ।
तस्यां दशायां वाक्यस्य तस्य स्यादनुवादता ॥२८॥
पूर्वं च लिङ्गभूतत्वं वक्तुर्ज्ञानावधारणे ।
वक्तुर्ज्ञानप्रसूतं हि वाक्यं तत्कार्यमिष्यते ॥ २९ ॥
कार्यात्कारणसिद्धिश्च सर्वेषामनुवादतः ।
पौरुषेयमतो वाक्यं न शास्त्रमभिधीयते ॥ ३० ॥
एवञ्च सति लिङ्गस्य व्यभिचारो ऽयमीक्ष्यते ।
न शास्त्रस्येति तस्य स्यादर्थासंस्पर्शिता कुतः ॥ ३१॥
लिङ्गस्यापि न चैवायं व्यभिचारोऽस्ति किन्तु यः ।
लिङ्गालिङ्गे न शक्नोति विवेक्तुं मूढचेतनः ॥ ३२ ॥
तस्यालिङ्गे लिङ्गरूपसाधारण्यनिबन्धनः ।
लिङ्गसंव्यवहारोऽयं विपरीतः प्रवर्तते ॥ ३३ ॥
श्रुतिलिङ्गाधिकरणे विस्तरेणैवमीरितम् ।
तेन न व्यभिचारोऽस्ति द्वयोर्लैङ्गिकशास्त्रयोः ॥ ३४ ॥
नन्वर्थ एव प्रथमं पुंवाक्येभ्योऽवगम्यते ।
अन्यथा हि कथं वक्तुर्धीर्विशिष्टा ऽनुमीयते ॥ ३५ ॥
अर्थेनैव विशेषो हि निराकारतया धियाम् ।
नचाप्रतीतेनार्थेन विशेषश्चावऽकल्पते ॥ ३६ ॥
अत्र ब्रूमो ऽयथार्थत्वशङ्कया ऽर्थो न निश्चितः ।
अनिश्चितश्च न ज्ञात इति तावद्व्यवस्थितम् ॥ ३७ ॥

किंत्वज्ञाते ऽपि शब्दार्थे पदजाते श्रुते सति ।
विमर्शो जायते श्रोतुरीदृशो मतिशालिनः ॥ ३८ ॥
अन्योन्यान्वययोग्यार्थं पदजातं ब्रवीत्ययम् ।
आप्तस्तेनामुना नूनं ज्ञातस्तेषां समन्वयः ॥ ३९ ॥
न कदाचिदसंबद्धानर्थानेष विवक्षति ।
न वा ऽप्रतीतसम्बन्धानिति दोषो न कश्चन ॥४०॥
नन्वेवं तुरगारूढस्तुरङ्गं विस्मृतो भवान् ।
वेदप्रामाण्यसिद्ध्यर्थमुत्थितस्तत्प्रहीणवान् ॥ ४१ ॥
लोकावगतशक्तिर्हि वेदे शब्दो ऽवबोधकः ।
लोके च लिङ्गभावेन प्रतीतिर्भवताश्रिता ॥ ४२ ॥
स्वयं त्विह समाधानमाचार्येणैव दर्शितम् ।
शब्दस्यार्थेन सम्बन्ध इति दर्शयता सता ॥ ४३ ॥
अन्विताथीभिधायित्वे पदानां हि स्थिते सति ।
विशिष्टा वक्तृधीर्ज्ञातुं शक्यते नान्यथा यतः ॥ ४४ ॥
ज्ञातेषु हि पदार्थेषु श्रोता वक्तरि कल्पयेत् ।
अन्योन्यान्वयविज्ञानं नान्यथेत्युपदर्शितम् ॥ ४५ ॥
पदानां तत्पदार्थेषु शक्तिः स्वाभाविकी स्थिता ।
पुंवाक्येषु विसम्वादशङ्कया सा तिरोहिता ॥ ४६ ॥
वेदेषु त्वस्मर्यमाणकर्तृकेषु स्वरूपतः ।
प्रमाणान्तरसंस्पर्शरहितार्थावबोधिषु ॥ ४७ ॥
न कर्तुरनुमानं स्याद्वाक्यत्वादिति लिङ्गतः ।
न कर्ता शक्नुयाद्वाक्यं कर्तुं कार्यं हि लौकिके ॥४८॥
तेन वेदे विसम्वादशङ्का नास्ति कथं चन ।
अर्थनिश्चयहेतुत्वादर्थसंदर्शिता स्थिता ॥ ४९ ॥
व्यपगतवाङ्मलपङ्कः प्रोद्धृतपरयुक्तिकण्टकः प्रकरः ।
सृष्टःप्रगुणतरोऽयं शालिकनाथेन नीतिपथः ॥५०॥

इति शालिकनाथमिश्रकृतौ नीतिपथो नामद्वितीयं प्रकरणं ॥ २ ॥

बहुधा जातिविषये विवदन्ते विपश्चितः ।
प्रभाकरमतेनायं तेषां प्रयास उच्यते ॥ १ ॥

केचिदाचक्षते जातिरिति विकल्पविलसितमिति । एकेतु सतीमपि जातिमाश्रयेभ्यो ऽभिन्नामनुमन्यन्ते । अन्येतु भिन्नामप्यनुमेयामाहुः । अपरेतु भिन्नाभिन्नामिच्छन्ति, तथा चाजातावपि जातिव्यवहारो बहुलमुपलभ्यते केषां चिदिति तन्निराकरणायेदमारभ्यते ।

जातिराश्रयतो भिन्ना प्रत्यक्षज्ञानगोचरा ।
पूर्वाकारावमर्शेन प्रभाकरगुरोर्मता ॥ २ ॥

नन्वाश्रयएव द्रव्यं जातिरसदिति सौगताः, तथाहि, न परमाणुषु चतुर्विधेषु पार्थिवाप्यतैजसवायवीयेषु जातिराश्रिता ऽभिमता; अनुवृत्ताकार—प्रत्ययवियोगात् । भिन्नेषु यदभिन्ना जातिरुपेयते तत्रानुवृत्ताकारावभासिनी बुद्धिरेव निबन्धनं; नच कस्यचन जन्तोः परमाणुषु करणपथविदूरवर्तिषु निपुणमपि निरूपयतोऽनुवृत्ताकारावभासिनी मतिराविर्भवति । यापि चेयं परमाणुरिति मतिः सापि परिमाणलक्षणगुणाकारणिका मीमांसकैरपि सङ्गीर्यते । पृथिवीत्वादिकमपि तत्तदसाधारणगन्धादिगुणसमवायमात्रलब्धात्मलाभायां पृथिव्यादिबुद्धौ निबन्धनम् । नच स्थूलेषु द्रव्येषु जातिः समवेयात् ? तेषामेव दुरुपगमत्वात् । न खलु स्थूलद्रव्यसम्भवो घटते ? । तथा हि, द्व्यणुकादिक्रमेण स्थूलद्रव्यान्तरारम्भकत्वाऽनुपपत्तेः, नचैवैकैकद्रव्यव्यतिरिक्तमपरमारम्भकमस्ति । संयोगो ऽपि च तयोरनुपपन्न एव, स हि नैकैकद्रव्यसमवेतः ? नाप्येकद्रव्यसमवेतः ? एकैकातिरेकेणानेकस्यानुपपत्तेः । अनेनैव मार्गेण त्र्यणुकस्य त्रिभिर्द्व्यणुकैरारम्भणीयस्य महिमगुणशालिनः स-

म्भवो निरस्तः । तदेवं दुरीभूता स्थवीयसामवयविनामारम्भसंकथा । अपि चावयविनः किमवयवेषु प्रत्येकं कात्स्न्येंन वृत्तिर्व्यासङ्गेन वेति चिन्तनीयं, न तावत् कात्स्न्येंन वृत्तिमुपलभामहे ? एकैकावयवगतस्य तस्याप्रतिपत्तेः । एकैकावयवगते च कम्पे रागे वा सकलस्यावयविनः कम्परागप्रतीतिप्रसङ्गात् । तथावयवान्तरे च कम्परागविरहे कम्परागविरहसमासक्तिः । अवयवी च कम्पेत न कम्पेत रज्येत न रज्येत चेति विषमां दशामाविशेत । नापि व्यासङ्गेनावयविनो वृत्तिरवयवान्तरविरहात्, अवयवशालिनो हि केन चिदवयवेन क चन केनचित् क्वचनेति व्यासङ्गिनी वृत्तिरुपपत्तिमती । किञ्चैकैकत्रावृत्तेरवृत्तिरेव एकैकातिरिक्तानेकाभावात् । किञ्च सकलावयवग्रहणे एव नियमेनावयवी ज्ञायेत, नच तथा सम्भवति ? अवयवान्तरेणावयवान्तरातिरस्कारात् । नच प्रकारान्तरेण वृत्तिरिति वदितुं शक्यम् ? अनुपपत्तेः प्रकारान्तरस्य । अवयवेभ्यश्चावयवी व्यतिरिच्यमानो ऽव्यतिरिच्यमानो वा न प्रमाणेन सङ्गच्छते, व्यतिरिक्तो हि तदग्रहेऽपि ग्रहणं कदाचिदनुभवेत्, न खलु भिन्नयोः सहोपलम्भनियमो घटयोरिव, तद्वदवयव्यपि भिद्यमानो नावयवैरेव सहोपलभ्येत । कस्याश्चिदपि दशायामननुभूयमानेष्वप्यवयवेष्वनुभूयेत । नचावयविनमवयवानुभवमन्तरेण केचिदुपलम्भन्ते ? अव्यतिरिच्यमानस्तु नास्त्येवेति वचनभङ्गिमात्रेणोक्तं भवति । तदेवमवयविद्रव्यमुपपत्तिभिरनुसन्धीयमानमेकान्ततो लीयते । कथं तर्हि स्थूलावभासिनी मनीषा समर्थनीया ? इत्थम्, उत्तराधरभावेन निरन्तरमुत्पन्नाः परमाणव एव समधिगतैन्द्रियकज्ञानजननयोग्यदशाविशेषाः प्रत्यक्षमीक्ष्यन्ते तांस्तथानुभवतस्तद्बलभावी मा-

न स एष स्थूलविकल्पो विजृम्भते । दूरादिव तरुषु निरन्तरेषु समनुभूयमानेषु वनमिति मतिः; अतः स्थवीयसां द्रव्याणामाश्रयाभिमतानामयोगाज्जातिरपि तदाश्रिता नाभ्युपगममर्हति । अपि च जातिरपि नेन्द्रियज्ञानेन प्रतीयते? तस्या नित्यत्वेनाभ्युपगमात्। नहि नित्यं कस्मै चित्कार्याय पर्याप्तम्? तद्धि न शक्तस्वभावं, नित्यं कार्योदयप्रसङ्गात्? अशक्तस्वभावं तु नित्यमविचिकित्सनीयाशक्तिकं न किञ्चित् कुर्यात्। नचाजनकमिन्द्रियज्ञानमनुभवति? यो हि विषयः स्वस्यान्वयव्यतिरेकौ ज्ञानमनुकारयति स प्रत्यक्षः । किञ्च, समुन्मिषितचक्षुषश्चिराय विषयान्तरानुसन्धानव्यापृतस्य चित्तस्य पुरोवर्तिनीं स्वस्तिमतीं कार्मार्क्षीं वा साक्षात्कुर्वाणस्य न जातिरपराऽवभासते!। अन्यच्च जातिरसौ पिण्डैः सहोत्पद्यते विनश्यति वा! तथोपगमे, स्वरूपहानिप्रसङ्गात्? एका हि जातिरनेकाधिष्ठाना प्रतिज्ञायते; उत्पत्तिमती विनाशिनी चान्याऽन्या स्यात्, विरुद्धधर्माध्यासस्य भेदापादकत्वात्। सेयं नित्या जातिरुदितवत्यां व्यक्तौ प्रतीयमाना नान्यत आगता? निष्क्रियत्वात्, नच तत्रैवासीत्? प्रागप्रतीतेः, नचु स्थितिरपि युक्तिमती? व्यक्तिरेव हि तस्या देशो नाकाशादिः? अनुत्पन्ना च व्यक्तिरिति काऽवतिष्ठतामाकृतिः? नचोत्पाद्ये ऽप्यवतिष्ठते? तदेषा जातिरवतिष्ठते नावतिष्ठते चेति सङ्कटमापतितम् । किञ्च व्यक्तेरभिन्ना भिन्ना वोभयरूपा वा जातिरास्थेया? तत्र नाभिन्ना! तथाभावे व्यक्त्या सहोत्पादे विनाशे वा सरूपापहारापत्तिरिति पुरस्तादुपन्यस्तम्। व्यक्तिमात्राङ्गीकारे च कोऽस्मत्पक्षस्य भेद इत्यपि चिन्तया ऽन्तः सीदन्तु बहवः? अतो व्यक्तिमात्रमेव तत्त्वमिति वदतां साहायकमेवाचरितमनतिरेकिणीं जा-

तिमुररीकुर्वाणैः। भिन्नत्वेऽपि पिण्डग्रहणमन्तरेण ग्रहणापत्ति-रुभयप्रतीतौ च सम्बन्धप्रतीतिसमासक्तिः अस्त्येवेति चेत् ? महदिदं वैयात्यं । कः खल्विह गवि गोत्वमिति मतिमभ्युपगच्छेदन्यत्र निरस्तत्रपायन्त्रणात्। भिन्नत्वे च वृत्तिप्रकारो दुर्निरूप एव, किं व्यासङ्गिनी वृत्तिरुत प्रत्येकपरिसमाप्तिमतीति ? एकत्र परिसमाप्तावन्यत्र न वर्तेतेति पुनरपि स्वरूपापहारः। अव्यासङ्गो ऽपि कालत्रयवर्तिनीषु व्यक्तिष्वनुपपन्न एव। प्रत्येकञ्च गौरिति प्रत्ययो विकल्पमात्रमित्यङ्गीकृतं स्यात्, नचोभयरूपता ? विरोधात्। नचोपलम्भवलेन विरोध एव नास्तीति चतुरस्रं ! तथाविधस्योपलम्भस्यैवासम्भावनीयत्वात्। अभिन्नाकारबुद्धिवोध्यं हि वस्त्वभिन्नमिति लौकिकाः, विलक्षणाकारबोधविषयश्च भिन्नं, तत्र यदि विलक्षणाकारप्रतीतिसमये द्वे वस्तुनी विलक्षणेनाकारेणावभातस्तदा ऽभेदप्रतीतिदशायामेक आकारो ऽनुभवनीयः; स जातिभागस्य पिण्डभागस्य वा तत्रैक द्विरवभासोऽयं स्यान्न तु जातिजातिमतोरभेदावभासः। अथ विलक्षणावप्याकारौ तादात्म्येनावसीयेते इति मतम्। तत्रापि पर्यनुयोजनीयः किमिदं तादात्म्यं नामेति ? यद्येकाकारतेति ब्रूयात् तर्हि पूर्वोक्तमेव दूषणमात्मसात्कृतं, शब्दयोः सामानाधिकरण्यं तादात्म्यमिति चेत् ? अयुक्तमेतत् गौर्वाहीक इत्यादावतादात्म्येऽपि दर्शनात्, उपचारस्तत्रेति चेत् अत्रापि भिन्नजातिवादिन उपचारमेव मन्यन्ते; वयन्तु विवक्षामात्रपरतन्त्राः शब्दा न वस्तुव्यवस्थापनायेशत इति सर्वत्र मन्यामहे। कथं तर्हि नानाभूतासु व्यक्तिषु बुद्धिरनुवृत्तमाकारमुल्लिखन्ती समुपजायते ? तेनास्या एव बुद्धेर्द्रढिम्नः कारणमनुमास्यामहे अस्ति तद्विशेषणं यदुपरागवशेने-

यमभिन्नाकारानुसन्धायिनी धीरुदीयत इति, तदपि न जाति साधनसमर्थं ? कार्यभूता हि बुद्धिरेषा कारणमाक्षिपन्ती यदनन्तरमेवोपजायते तदेव कारणं कल्पयति न पुनरप्रतीतमपरमपि किञ्चिदुपस्थापयति । सा चेयं स्वलक्षणविषयदर्शनसमनन्तरभाविनीति ता एव व्यक्तयः स्वनिर्भासा बुद्धी रुपजनय्य तन्मुखेन तामेकाकारानुभासिनीं धियमाविर्भावयन्ति, नितान्तभेदवतीनां च व्यक्तीनां कासांचिदेष महिमा न सर्वासामिति किमनुपपन्नम् ? यथा ह्यभिन्ना अपि चक्षुरालोकमनस्का एव सामग्री समुपनिपतिता एकविज्ञानोदयलक्षणं कार्यमारभन्ते, तथा व्यक्तयोऽपि किं नारभन्तइति नेदं प्रतिपत्तिकठिनम् । सा चेयं स्वाकारेणाभेदेनात्यन्तिकभेदयोगिनीनामपि व्यक्तीनामभेदं सम्पृचन्ती सम्पृक्तिरित्यनुगीयते । एषा च मनीषा न स्वलक्षणं विषयीकरोति तस्य विशदावभासित्वात्, अस्याश्चाभिलापसंसर्गयोग्यार्थप्रतिभासत्वात्, अभिलापानाञ्च विशदाकारमवभासितुमशक्तेः अभिलापमात्रेण तथाविधप्रतिपत्त्यभावात् । तेनैषा न स्वच्छाकारावभासिनी । नन्वेतत् प्रतीतिपराहतमुदितं गौरयमिति बुद्धौ विशदावभासात् ? उच्यते, न विशदावभासित्वमत्रजानीमहे तत्तु समानकालभाविनो निर्विकल्पप्रत्ययस्य स्वलक्षणावलम्बिनः प्रसादात्, तदभावे तथात्वानुपलम्भात् । नचैतद्वाच्यमेकमेव वस्त्विन्द्रियैर्निराकारमनुभूयते शब्दैश्चाविशदावभासमिति ? भिद्यमाने ऽपि बोधोपाये बोध्याभेदे बोधवैलक्षण्यानुपपत्तेः । नियताकारश्च स्वलक्षणमनियताकारश्चास्यां बुद्धौ चकास्ति, तदेवं विशदाविशदतया नियतानियततया च स्वलक्षणस्य विकल्पाकारस्य च भेदे सत्यपि विकल्पाः साक्षात्परम्परया

वा स्वलक्षणविषयदर्शनप्रभवतया स्वलक्षणग्रहणाभिमानिनो जायन्ते तत एव तत्र प्रवर्तयन्तः पुरुषं व्यवहाराङ्गभावमनुभवन्ति पारम्पर्येण वस्तुनि प्रतिबन्धादवस्त्वपि प्रतिबद्धं भवति मणिप्रभायां मणिबुद्धिवत्। यथा हि खलु मणिप्रभायां मणिधिषणायां मणिकिरणविषयिणी मणिबुद्धिरयथार्थतया भेदमजुषमाणापि मणिमनुप्रतिबद्धेति मणिसमधिगमनिमित्तं भवेद; तथेयमपि वस्तुतः स्वलक्षणमगृह्णत्यपि स्वलक्षणादर्शनं दर्शनतो विकल्प इति स्वलक्षणप्रतिबद्धा सती तत्प्राप्तये प्रभवति। निर्विकल्पकप्रत्ययसमधिगतस्वलक्षणप्रापकतया च स्मृतिरियमुच्यते। तत एव च गृहीतग्राहित्वादप्रमाणमन्यथा वस्तुविषयतया वस्तुप्रापकतया चानुमानमिव प्रमाणमेव स्यात्? स चायं तस्याकारः प्रथमानो न ज्ञानस्यैव? बहिष्ट्वेनावभासात्। नचार्थगत एव? उक्तेन न्यायेन निरस्तत्वात्। किन्त्वयमसन्नेव ज्ञानमनुभासते शब्दमिव प्रतिशब्दः। एतत्तु शास्त्रचिन्तका विवेचयन्ति प्रतिपत्तारस्तु दृश्यविकल्पावर्थावेकीकृत्य ताभ्यामेवानुमन्यमाना व्यवहारेषु प्रवर्तन्ते प्रवृत्ताश्चार्थप्रतिलम्भेनाविसंवादं मन्यन्ते कथं पुनरेकत्वाध्यवसायो दृश्यविकल्पयोः? अतद्व्यावृत्ततया तत्सदृशत्वात्, यथा दृश्यस्यातद्व्यावृत्तता तथा विकल्पस्यापि। तस्माज्जातिप्रत्ययो विकल्पमात्रं परमार्थस्तु न जातिर्नाम किञ्चित्। अपि च द्रव्यसमवायिनी जातिरभिमता, नच गन्धादिव्यतिरिक्तं द्रव्यमुपलभामहे चक्षुरादीनां प्रत्येकं रूपादिष्वेव व्यापारादिति पूर्वपक्षसंक्षेपः।

अत्रोच्यते, संविदेव हि भगवती विषयसत्त्वावगमे शरणं, गवादिषु च स्थूलाकारावलम्बिनी बुद्धिरुदीयतइति निर्विवादं

नयवीथ्याञ्च निर्णीतं प्रमाणं स्मृतिश्च प्रत्यय इति । ननु तदेवासदिति मन्यते, अवयव्यादीनामेकान्ततो ऽनुपपन्नत्वात् । उच्यते न दृष्टे काचिदनुपपत्तिः । ननूक्तावयविनोऽनुपपत्तिः, आरम्भकाभावात्, अनुपपन्नेयमनुपपत्तिः; कार्यं प्रतीतं कारणकल्पनायां प्रमाणम् । न पुनः स्फुटावाधितं कार्यं कारणानिरूपणायापन्हवमर्हति, तेनावयवा एव समासादितसंयोगलक्षणासाधारणगुणा अवयविन उत्पादका भविष्यन्ति संयोगश्चैक एवानेकत्र वर्तते। एकैकत्र संयुक्तप्रत्ययानुदयात्, एकातिरिक्तानेकाभावे ऽप्येक एव स द्वितीय आश्रयः संयोगस्येति न दोषः । ननु द्रव्ये एव तथोत्पन्ने संयोगविकल्पमाविर्भावयतो न तु तदतिरेकी संयोगो नाम कश्चिद् गुणविशेषः, तन्न, प्रत्यभिज्ञायेते हि द्रव्ये अनुवृत्ते, कादाचित्की च तयोरपरेयं दशा दृश्यतइति भवत्येव भेदसिद्धिः स्थापिता मीमांसाजीवरक्षायां प्रत्यभिज्ञा, अतः संयोगलक्षणासाधारणगुणासमवायिकारणोपगृहीता अवयवा एव समवायिकारणमवयविन उपपद्यन्ते, यश्चायमवयविनो वृत्तिविकल्पे दोष उक्तः सो ऽप्यवयविनः प्रतीतौ स्थितायामनुपपन्नः । व्यासक्त एकावयवेष्ववयवी नैकत्र जातिवत्परिसमाप्तः, अवयवान्तरैरपि च विना स तस्य को ऽपि महिमा य एक एवानेकावयवानुस्यूत इति किंन कल्प्यते, यद्यपि चावयविन एकैकवावृत्तिस्तथापि नावृत्तिदोषः संयोगसचिवा एवावयवा जनकाएव आश्रयभूता यतः, जनकतयैवाश्रयत्वात् समवायिकारणानाम् । अतएव संयोगः सद्वितीयाश्रय इति न दोषः, नच सकलावयवोपलम्भसापेक्षा तदुपलब्धिरवयविनस्तेभ्यो भिन्नत्वात् । नचैतावता एकावयवग्रहणमात्रेऽपि ग्रहणपर्यनुयोगो युक्तः ? कार्यानुगुणत्वात् कारणक-

ल्पनायाः, कार्यसिद्ध्यर्थं हि कारणं परिकल्प्यते न कार्यविनाशाय, तेन यावतावयवानां ग्रहणे तदुपलम्भस्तावतामेवावगमस्तदवगमनिबन्धनमिति दर्शनबलेनाभ्युपेयते । भिन्नत्वेऽपि तत एव सहोपलम्भनियमः उपेयोपायभावात्, उपेयभूतोऽवयवी उपायवर्तिनश्चावयवाः प्रत्येकं तु तेषां शक्यतएवासहोपलम्भोऽपि वक्तुम्, अवयवान्तरयोगिनो ऽवयविनोऽपि परिग्रहे इतरावयवव्यतिरेकोऽपि सुदर्श एव, इयञ्च भेदसाधने युक्तिः । अन्वयव्यतिरेकाभ्यां हि वस्त्वन्तरत्वमवसीयते, अवगम्यमानो ऽपि चावयवी विलक्षणो बुद्धिगोचरतामाचरत्येव, अवयवी हि स्थवीयानेको हृदयमागच्छति अवयवास्तु क्षोदीयांसो भूयांसश्च, स चायमवयवी महत्वाद्रूपवत्त्वाच्च चाक्षुषः स्पार्शनो वा, पार्थिवो वाम्भसीयो वा तैजसो वा, वायवीयस्तु महत्वात् स्पर्शवत्त्वाच्च स्पार्शन एव । द्व्यणुकस्तु चातुर्भौतिको ऽप्यमहत्वाद प्रत्यक्ष एव । तस्य चामहत्वमवयवबहुत्वमहत्वप्रचयविशेषाणां महिमगुणकारणानामभावात् । गगनादीनां तु महतामपि रूपस्पर्शविधुरतया न प्रत्यक्षगोचरतेत्यलमति विस्तरेण । ननु सकलावयवसमाश्रितत्वादवयविनस्तिरोहितैरवयवैः सहेन्द्रियासन्निकर्षे कथमवयविना समागमः ? नचासङ्गतमेव बहिरिन्द्रियमवबोधकमिति प्रतिज्ञा युज्यते ? अवयवानामप्यसन्निकृष्टेन्द्रियबोध्यत्वापत्तेरिति, उक्तोत्तरमेतत्, भिन्नत्वादवयविनो ऽवयवान्तरसंयोगेऽपि संयोगबुद्धेः पटादिषूपपन्न एवेन्द्रियसन्निकर्षोऽवयविनः तदनया दिशा तावदुपपन्नमाश्रयद्रव्यमाकृतेः पृथुलम् । ननूक्तं रूपादिव्यतिरेकी द्रव्यं नोपलभ्यत इति, किमिदं पश्यतोहरत्वं, प्रतीयते हि महानवयवी रूपादिव्यतिरेकी, अत एव जपाकुसुमसन्निधानाभिभूतरूपमपि स्फ-

टिकद्रव्यं प्रत्यभिज्ञायेत, कथंनामागृहीतं प्रत्यभिज्ञायेत ? अपि च दर्शनस्पर्शनाभ्यामेकार्थग्रहणाद्रूपस्पर्शव्यतिरेकिद्रव्यं स्फुटतरमतीतं नापन्होतुमुचितं, वनादिषु बाधकप्रत्ययबलेन कल्पनेयं प्रसरति दूरतयान्तरालाग्रहणनिबन्धनोऽयमभेदग्रहव्यवहारः प्रवर्त्ततइति। अवयविनि तु बाधकज्ञानं नास्तीति पुरस्तादावेदितम्। तेनाश्रयद्रव्याभावाज्जातेरपलापः प्रलापमात्रमिति स्थितम्।

यच्चेदमुदितं नित्यतया जातेरात्मविज्ञानजनने ऽपि न शक्ततेति तदपि क्षणभङ्गनिराकरणपर्वणि विस्तरेण नित्यानामर्थक्रियाकारित्वसमर्थनेन प्रत्यूढम्। मा वा स्वविज्ञानमपि जातिर्जीजनत् तथापि कथङ्कारमसावप्रत्यक्षा ? न खल्वियमाज्ञा राज्ञः कारणभूतएव प्रत्यक्षेण प्रचरितव्यमिति, यत्तु यतः प्रतीयते स तस्य विषय इति सार्वलौकिकम्। ननु प्रत्यक्षमप्यविसम्वादादेव प्रमाणमविसम्वादश्च तस्मादात्मलाभात्; अन्यतस्तु भवतो नित्यभूतस्य वा ऽभावे ऽपि भावसम्भवान्नियमेन सम्वादायोगादिति बलादभ्युपेयं प्रत्यक्षस्य कारणमेव विषय इति। अत एव च प्रत्यक्षमनुमानं च द्वे एव प्रमाणे तयोरेवार्थाविसम्वादकत्वात्। प्रत्यक्षं साक्षादर्थेन प्रतिबद्धमनुमानं त्वर्थप्रतिबद्धलिङ्गजन्मतया पारम्पर्येण प्रतिबद्धम्। यस्य तु न साक्षान्नापि परम्परयाऽर्थप्रतिबन्धो न तस्य प्रामाण्यमुचितं तस्य तदविसम्वादनियमाभावात्। अर्थाविसम्वादि च प्रमाणं व्यवजिहीर्षमाणा लौकिका आद्रियन्ते। सिद्धेदयं मनोरथो यदि ज्ञानान्तरनिबन्धनो विसम्वादः प्रार्थनीयः। यद्विषयमेव च यद्ज्ञानं तेनैव तस्मिन् विषये पर्युपस्थापिते नास्ति प्रत्ययान्तरनिबन्धनाविसम्वादप्रार्थना

अर्थेनाप्रतिबद्धमपि च ज्ञानं स्वमहिमपर्युपस्थापितार्थमविसंवादकमेव संप्रवर्तते। तेनोत्पत्तिमात्रएव विज्ञानस्य परापेक्षा न प्रामाण्येऽर्थाविसम्वादलक्षणे। अतः सिद्धं शास्त्रादीनामपि अर्थप्रतिबन्धविरहिणां प्रामाण्यम्। एतदर्थमेव नयवीथ्यां सर्वं ज्ञानं विषया ऽव्यभिचारीति प्रतिपादितम्। अतो नित्यायामपि जातौ भवत्येव प्रत्यक्षस्य प्रामाण्यम्। यत् पुनरुक्तमेकभावेन मनसा समाकलयतः कालाक्षीं स्वतिमतीं वा नास्ति जातिप्रतीतिरिति, तदसिद्धम्, आकारो हि सा, प्रतीयते चाकारे यदि परमर्थान्तरानुसन्धानविकलतया तस्यानुवृत्तिर्नावसीयते, अनुवृत्ता च जातिर्नानुवृत्तिः। अग्रहणे ऽपि च धर्मस्य धर्मिणो ग्रहणं नानुपपन्नम्। अत एव च पिण्डान्तरसमधिगमे पूर्वाकारपरामर्शिनी मनीषा प्रत्यभिज्ञासमाख्यातोदीयते। यच्चोक्तमनाश्रयतया तत्रैव प्रागनवस्थिता निष्क्रियतया चान्यस्मादनागच्छन्ती स्वरूपहानिप्रसङ्गेन व्यक्त्या सहानुपजायमाना कथं सम्बन्धमनुभवति जातिरिति? तदिदं मायामोहजननं यथाजातजनोद्वेजनमात्रं, संयोगो ह्युभयकर्मजो भवति मल्लयोरिव, अन्यतरकर्मजो वा स्थाणुश्येनयोरिव, संयोगजो वा यथा तन्तुतुरीसंयोगादुत्पन्नमात्रस्य पटस्य तुरीसंयोगः, सच कर्म प्राक्संनिधानं वापेक्षते समवायस्तु संयोगाद्विभिन्नो न कर्म वा तत्र वा प्राक्सत्तामपेक्षते यत एव तु पिण्डस्योदयः समवायिकारणात् तत एव जातिसमवायो ऽपि तस्य सम्पद्यते, समवायश्च न वयं काश्यपीया इव नित्यमुपेमः, विनष्टायामपि व्यक्तौ न जातिरन्यत्र याति न च तत्रावतिष्ठते न विनश्यति केवलं तद्व्यक्तिसमवायस्तस्या निवर्तते, तेन तस्यानुपलम्भनं, तथाहि न याति निष्क्रियत्वान्नावतिष्ठते व्यक्तिमात्राश्रयत्वात् तदभावेऽवस्था-

नासम्भवात्, न विनश्यति पिण्डान्तरेऽपि प्रत्यभिज्ञायमानत्वादिति। विनाशो हि नामात्यन्तिको ऽनुपलम्भ इत्यमृतकलायामुक्तम्, अतो न सङ्कटं किञ्चित्। यच्च पिण्डेभ्यो जातेरभिन्नत्वमुभयरूपत्वञ्च दूषितं तदस्माकं साहायकमेवाचरितं को हि नाम सचेतनः पदार्थान्तरमप्रत्यभिज्ञामभेदाश्रयेण साधयेत् ? को वा परस्परविरोधिनी एकस्य द्वे रूपे प्रतिजानीते ? भेदवादः पुनरस्माकमपि सम्मत एव । नच तत्रेहप्रत्ययापत्तिदोषः ? प्रतीयेत ह्याधारमाधेयञ्च सम्बन्धञ्च प्रतीयात्, सर्वञ्च रूपं रूपिग्रहणमन्तरेण न प्रतीयते ऽतो न समानेन्द्रियग्राह्यतया जातिरपि व्यक्तिप्रत्ययानुप्रवेशिनीति नेह प्रत्ययसम्भवः, कर्मणि त्वनुमेये भवत्येवेह प्रत्ययः । वृत्तिविकल्पे तु कृत्स्नसमाप्तिरेवाङ्गीकरणीया न चान्यत्रावृत्तिदोषः ? प्रत्यक्षावगमाद्वृत्तेः प्रत्यभिज्ञायाः स्थापितत्वात् । पृथग्ग्रहणं तु जातेरसिद्धमेव । व्यक्त्यन्तरे हि जातिः प्रतीयमाना प्राच्यपिण्डपरिहारेण प्रकाशते । उदीच्यपरिहारस्तु प्राक्तनसमधिगमसमये सिद्धमेवेति परिहृतनिखिलानुपपत्तिकमुपपादितं गवादिषु साधारणाकारानुभवसिद्धं जातितत्त्वमुपपन्नम् । प्रत्यक्षवेद्यत्वं जातेरिन्द्रियव्यापारानुविधानेन प्रतीतेः संयुक्तसमवायलक्षणश्च सन्निकर्षोऽपि नानुपपन्नः, गौरयमिति च मतिर्विशदतरार्थनिर्भासिनी न शक्यते ऽपवदितुम् । समसमयसम्भवनिर्विकल्पकदर्शनबलेनेत्थमियं प्रथत इति तथाभावे प्रमाणाभावात् । शब्दमात्रे तु केवलाकारपरिगृहीताकारिप्रतीते रूपान्तरानवभासाच्चाविशदावभासः । ऐन्द्रियके तु सम्वेदने प्रचुरतररूपावभासाद्विशदावगम इति नावाह्यविषयत्वापत्तिः । नन्वेषा जातिप्रतीतिर्भिन्नामेव व्यक्तिमभेदेनागमयन्ती जायतइति भ्रान्ति-

रेषा न प्रत्यक्षं प्रमाणम्। इयन्तु भ्रान्तिर्निर्बीजा न युज्यत इति बीजभावेन जातिरनुमीयते तत्समवायश्च । दृष्टा हि सन्तापसञ्चारितदहनपरमाणुसम्वलितायोगोलके दहनाकारानुकारिणी प्रतीतिरिति । तदिदमुक्तोत्तरमपि पुनः पर्यनुयोज्यामहे विस्मरणापराधादिति मन्यामहे । भिन्ना हि जातिरवगम्यते । न खल्वाकारमाकारिणश्चैकमेव मन्यन्ते केवलं शब्दप्रयोगे समाधिर्वक्तव्यः । तत्रच लौकिकः प्रयोग एव शरणम् । प्रयोगश्च श्रुत्या लक्षणया गौण्या वा वृत्त्या नानुपपन्नः। समवायस्तु भवतु वस्त्वन्तरे सिद्धे ऽनुमेयः प्रत्यक्षेण तदनवगमात् आकृतिस्तु न प्रत्यक्षप्रमाणसिद्धा ऽनुमेया । नचानुमानमपि शक्यं शाक्येषु प्रतिबद्धदृष्टिष्वित्यलमतिविस्तरेण ।

अत्र केचिद्गवादितुल्यतया द्रव्यगुणकर्मस्वपि सत्ताजातिमङ्गीकुर्वन्ति भवति हि सर्वेष्वेव सत्सदिति प्रत्ययानुवृत्तिरिति सम्वदन्तः तदिदमपरामृष्टजातितत्त्वानामुपर्युपरिकल्पितम् । पूर्वरूपानुकारिणी यदि धीरुदीयते ततो ऽभ्युपेयैतैव जातिः। नच नानाजातीयेषु द्रव्येषु सर्षपमहीधरादिषु गुणेषु गन्धरसादिषु समानाकारानुभवो भवति केवलं तु सत्सदिति शब्दमात्रमेव प्रयुज्यते। भवति च विनापि जात्या पाचकमीमांसकादिशब्दप्रवृत्तिः । नन्वेकशब्दप्रवृत्तिरपि नैकनिबन्धनमन्तरेणोपपद्यते ? सत्यमस्त्येवोपाधिरेकः प्रमाणसम्बन्धयोग्यतानाम। तत्रान्यः पण्डितम्मन्यो मन्यते । नन्विदमसमञ्जसमुच्यते सर्वत्र ह्युपाधिभेदमवगम्यौपाधिकशब्दानुविद्धः प्रत्ययो भवति न पुनः प्रागेव सह वा। इहच प्रमाणमेवजायमानमस्तीत्येवमेव जायते । प्रमाणोदयोत्तरकालं ह्यनया भवितव्यम्। किञ्च सत्यपि प्रमाणयोगे किञ्चिदस्तीति गम्यते किञ्चिच्चासी-

दिति तथान्यद्भविष्यतीति । तत्र प्रमाणसम्बद्धस्य वर्तमानत्वात् सर्वत्र वर्तमानसत्ताप्रत्ययेन भवितव्यम् । तदतिरेकिणि तु सत्त्वे तस्य त्रेधा व्यवस्थानाद्युक्तस्त्रिधाऽवभासः, अपिच भूमितलनिखातेषु चिरतरकालवर्तिषु प्रलीनज्ञातृपुरुषेषु लिङ्गादिरहितेषु सकलप्रमाणप्रत्यस्तमयेऽपि वर्तमानसत्तासन्देहः । स च प्रमाणसम्बन्धातिरेकिणीं सत्तामन्तरेणानुपपन्न इति । तदिदमनाकलितपरवचनस्य केवलं गलगर्जितम् । उक्तमस्माभिः प्रमाणसम्बन्धयोग्यतोपाधिः । यदि हि प्रमाणसम्बन्ध उपाधिरिति वदेम तत इत्थमुपालभ्येमह्यपि । योग्यता तु प्रमाणसम्बन्धातिरिक्ता प्रमाणेनावसीयतइति युक्त एवास्तीति प्रमाणोदयः । तस्याश्च त्रैकाल्यात् त्रैकाल्यावगमोऽपि समर्थित एव । तस्याश्च संशयिततापि युक्तैव । का पुनरियं प्रमाणसम्बन्धयोग्यता नाम ? ननु नामान्तरेण महासामान्यमेवेदमुररीकृतम् । नैतदेवं, यो हि महासामान्यं सत्तां सङ्गिरते सोऽपि स्वरूपमात्रं पदार्थानां मन्यतएव । अन्यथा शशशृङ्गादीनामनुत्पन्नानिवृत्ता- नि । नाञ्च किमिति महासामान्येन सम्बन्ध एव न स्यादिति पर्यनुयोगे कः परिहारः ? तेन स्वरूपवत्त्वैव प्रमाणसम्बन्धयोग्यता । यस्यहि स्वरूपमस्ति तद् प्रमाणेन परिच्छिद्यते । त्रैकाल्यमपि स्वरूपस्यैव युक्तम् । नच महासामान्यस्य ? नित्यत्वात् । तथा संशयिततापि तस्यैव न पुनरसंशयिते स्वरूपे अपरः सत्तासन्देहो भवति । अथ नित्याया अपि सत्तायाः कः सम्बन्धो यः स त्रिकालः । तस्यैव त्रैकाल्यं कुतः । नान्यदत्रोत्तरं स्वरूपत्रैकाल्यादित्यतः । तस्मात्स्वरूपसत्तोपाधिक एव सच्छब्दो न पुनरेक आकारः सत्तानाम द्रव्यगुणकर्मणाम् । अपि च काश्यपीयानां जातिसमवायविशेषेषु स्वरूपसत्तोपाधिक एव सच्छब्द इत्यभ्युप-

गमः । तस्य च द्रव्यगुणकर्मस्वपि तथा भावोऽस्तीति । तदेव मपाकृते पदार्थस्वरूपातिरेकिणि महासामान्ये यत्स्वमनीषा निर्मितकुतर्कबलेन सन्मात्रविषयं प्रत्यक्षमिति साधितं तद्वतिदूरोत्सारितम् । एतेनैव न्यायेन शब्दत्वमपि निरस्तं वेदितव्यम् । नहि ककारगकारयोरेकाकारमनुगतं परामृशन्ती मनीषा समुन्मिषति । योऽपि चायं शब्दशब्दः सोऽपि श्रोत्रग्रहणोपाधिबललब्धप्रवृत्तिरिति न जातु जातिकल्पनायै विभवति । तत इदमपहास्तितम् । यदाहुः "शब्दत्वमेव तत्तदभिव्यञ्जकध्वनिनिबन्धनया नानावर्णरूपतया विषयीभवत् तस्यतस्यार्थस्यावगमाय कल्पत" इति ।

अनयैव च दिशा ब्राह्मणत्वादि जातिरपि निवारिता । नहि नानास्त्रीपुरुषव्यक्तिषु पुरुषत्वादर्थान्तरभूतमेकमाकारमात्मसात्कुर्वन्ती मतिराविर्भवति नहि क्षत्रियादिभ्यो व्यावर्तमानं सकलब्राह्मणेष्वनुवर्तमानमेकमाकारमतिचिरमनुसन्दधतोऽपि बुध्यन्ते । यदप्याहुः, यद्यप्यपातसंजातया धिया ब्राह्मण्यं नावसीयते तथापि ब्राह्मणभूतमातापितृसम्बन्धानुसन्धानप्रभवायां बुद्धौ तच्चकास्तीति । तदपि च स्वमानसविसंवादि । अनुसन्दधानोऽपि मातापितृसम्बन्धं को जात्वेकमाकारमवबोद्धुं प्रभवति । यच्चोपदर्शितं, यथा विलीनमाज्यं तैलादव्यतिरिच्यमानं गन्धग्रहणसहकारिणा चक्षुषैव भिन्नमवगम्यतइति । तदपि न सुन्दरं । नहि तदानीं चाक्षुषस्य संवेदनस्य विषयातिरेकः । किं त्वनुमानमेव तत्र सर्पिषो यस्तु निपुणदर्शी सूक्ष्ममपि रूपमीक्षितुं क्षमः स चक्षुषैवाज्यजातिमपि प्रत्येति । न गन्धग्रहणमपेक्षते । नन्वेवं वह्नवहीनं किंनिबन्धनो हि तदानीमाहवनीयादिसाध्यकर्मसु केषांचिदधिकारो

नान्येषां; किं निबन्धना च ब्राह्मणशब्दस्य प्रवृत्तिव्यवस्था अत्रोच्यते। अनादौ संसारे जन्यजनकभावेन व्यवस्थितास्तावत् काश्चिदेव पुरुषसन्ततयः सन्ति तासामन्योन्यव्यतिरेक- जाताः स्त्रीपुंसव्यक्तयो ब्राह्मणशब्दवाच्याः। अनिदम्प्रथमतया च सन्ततेः सर्वेषां तत्सन्ततिपतितत्वात् सिद्धा ब्राह्मणशब्दवाच्यता। तेन सन्ततिविशेषप्रभवत्वमेव ब्राह्मणशब्दप्रवृत्तावुपाधिः। तत्प्रभवानामेव कर्मस्वधिकार इति न किञ्चिदवहीनं केपुनस्ते सन्ततिविशेषाः। न ते परिगणय्य निर्देष्टुं शक्यन्ते किन्तु लोकत एव प्रसिद्धाः प्रत्येतव्याः। तथा च तज्जन्यत्वे ऽवगते ब्राह्मणशब्दं प्रयुञ्जते लोकाः। कथंपुनस्तज्जन्यत्वमेव शक्यमवगन्तुं ? स्त्रीणामपराधसम्भवात्। सम्भवन्ति हि पुंश्चल्योऽपि स्त्रियः परिणेतारं व्यभिचरन्त्यः। उच्यते। उक्तमेतत् दृश्यादर्शनमेवाभाव इति। यत्र यावदुपलब्धिसामग्री तावत्यां सत्यामपि यासां व्यभिचारो न दृश्यते तासां नास्त्येव व्यभिचार इति लोकप्रमाणकमेतत्। अपिच अप्रमत्तैः स्त्रियो रक्षणीयास्तासु नास्त्येव व्यभिचारसम्भावनावकाशो यासु त्वस्ति माभूत् तदपत्येषु तत्सन्ततिप्रभवत्वनिश्चयः। नचैतावता यत्रापि निश्चयः शक्यस्तत्राप्यनिश्चय इति युक्तमिति। यच्च वह्नीषु ज्वालास्वेकवर्तिवर्तिनीषु जालात्वं सामान्यं प्रत्यभिज्ञागोचरः कैश्चिदिष्यते तदपि गुरुरस्माकं न मृष्यति। स खल्वेवं निरीक्षांचक्रे अन्यथासिद्धा बुद्धिः सामान्यकल्पनाबीजम्। इयं तु भेदाग्रहणेन शुक्तिकारजतप्रत्ययवदुपपद्यतइति नालं सामान्यमुपस्थापयितुं। तेन भेदग्रहणपुरस्सरमभेदज्ञानं भिन्नेषु जात्यभ्युपगमे शरणमिति निरवद्यम्

शालिकनाथेन कृतं कृतमतिना जातिनिर्णयाख्यमिदम्।

बहुविधविवादहरणं प्रकरणमुरुणावधानेन ॥ ३ ॥

इति जातिनिर्णयाख्यं प्रकरणं तृतीयम् ॥ ३ ॥

यथार्थं सर्वमेवेह विज्ञानमिति सिद्धये ।
प्रभाकरगुरोर्भावः समीचीनः प्रकाश्यते ॥ १ ॥
तत्र तावदिदं केचिदूचिरे चारुचेतसः ।
भ्रमसन्देहविज्ञाने अयथार्थे उभे इति ॥ २ ॥
इदं रजतमित्येषा या शुक्तिशकले मतिः ।
सा चेदयथार्था भ्रान्तित्वं तदा तस्यास्तु कीदृशम् ॥ ३ ॥
यथावस्थितवस्त्वाभमपि ज्ञानं यदा भ्रमः ।
प्रमाणेषु तदाऽऽपन्ना सर्वेषु भ्रमरूपता ॥ ४ ॥
विवेकाग्रहणं भ्रान्तिरिति चेन्नैतदीदृशम् ।
सुषुप्ते ऽपि भ्रमापत्तेः सर्वभेदापरिग्रहात् ॥ ५ ॥
भेदाग्रहे गृहीते च यदि स्याद् भ्रमरूपता ।
दूरात् सामान्यमात्रस्य दर्शनं स्यात् भ्रमस्तदा ॥ ६ ॥
यथार्थदर्शनत्वे च बाधको ऽपि न युज्यते ।
अज्ञानभेदग्रहणो न बाधकमतिर्भवेत् ॥ ७ ॥
यथार्थतापि चैतस्याः कथमित्यपि चिन्त्यताम् ।
एषा ऽपि रजतत्वेन शुक्तिकामध्यवस्यति ॥ ८ ॥
रजतत्वं न शुक्तेश्च रजतस्य न शुक्तिता ।
तयोरन्योन्यभिन्नत्वं प्रत्यक्षेणावधारितम् ॥ ९ ॥
अथेयं रजतत्वेन न शुक्तिमवलम्बते ।
सामानाधिकरण्येन प्रतिपत्तिर्विरुध्यते ॥ १० ॥
रूप्यार्थिनः प्रवृत्तिश्च शुक्तौ स्यान्निर्निबन्धना ।
अग्रहो ऽपि न भेदस्य प्रवृत्तौ कारणं यतः ॥ ११ ॥
रजतप्रतिपत्तिश्च नेयमन्धस्य जायते ।

तेनेयमिन्द्रियाधीना संयुक्ते चेन्द्रियं धियम् ॥ १२ ॥
समर्थमुत्पादयितुं शुक्तिसंयोगि चेन्द्रियम् ।
तेन सैवेन्द्रियेणेह रजतत्वेन गृह्यते ॥ १३ ॥
स्यान्मतं शुक्तिकामात्रमिन्द्रियेणावसीयते ।
तदेव सदृशत्वेन रजतस्मृतिकारणम् ॥ १४ ॥
सदृशप्रत्ययेनेह संस्कारोद्बोधहेतुना ।
तदित्युल्लेखरहिता रजते भवति स्मृतिः ॥ १५ ॥
स्मृतावस्यां मनोदोषात् तदित्यंशोऽवखण्डितः ।
तेनेन्द्रियानुकारित्वमन्यथासिद्धमिस्रसत् ॥ १६ ॥
अनुभूतेऽपि विषये तत्परामर्शवर्जितम् ।
न बोधं स्मृतिमिच्छन्ति धारावाहिकबोधवत् ॥ १७ ॥
अपरोक्षपुरोवर्तिसामानाधिकरण्यतः ।
नेयं स्मृतिः किन्तु शुक्तौ भ्रान्तोऽयं रजतग्रहः ॥ १८ ॥
स्मृत्युद्बोधनिमित्तं च स्वप्ने किञ्चिन्न विद्यते ।
पीतशङ्खावबोधे च द्विचन्द्रग्रहणे तथा ॥ १९ ॥
दिङ्मोहालातचक्रादिभ्रान्तयश्च कथं पुनः ।
स्मृतित्वाश्रयणेनैता वर्णनीया यथार्थतः ॥ २० ॥
तेनेन्द्रियादिदोषेण जायन्ते भ्रान्तिबुद्धयः ।
बुध्यमाना वस्तुरूपमन्यथास्थितमन्यथा ॥ २१ ॥
स्थाणुर्वा पुरुषो वेति सन्देहो योऽपि जायते ।
अभावात्तादृशोऽर्थस्य स यथार्थः कथं भवेत् ॥ २२ ॥
अत्र ब्रूमो य एवार्थो यस्यां संविदि भासते ।
वेद्यः स एव नान्यद्धि वेद्यावेद्यस्य लक्षणम् ॥ २३ ॥
इदं रजतमित्यत्र रजतञ्चाऽवभासते ।
तदेव तेन वेद्यं स्यान्न तु शुक्तिरवेदनात् ॥ २४ ॥

ल्पयितुं शक्यते । नान्यस्येत्यवघातादिविनियोगादवगम्यते । एवं चेदुपपन्नमवघातादेरपि प्रयाजादिभिः सह करणोपकारजनकत्वम् । कस्मात्पुनः प्रयाजादिवदवघाताद्यो ऽप्युपकारका नाभ्युपेयन्ते । प्रकृताधिकारनियोगप्रत्यभिज्ञानात् । सम्भवति चात्र नियोगैक्यं तदीयव्रीहिसंस्कारगुणेनेत्युक्तम् । प्रयाजादितुल्यत्वे हि अवघातादीनामङ्गीक्रियमाणे उत्पत्तिनियोगान्तरमाश्रयणीयमिति वक्ष्यामः । तत्र संग्रहश्लोकाः ।

सन्निधानवशोत्पन्ना प्रकृता पूर्वभाविनी ।
भावाधिष्ठा त्वभिज्ञेति तदनुग्रहकाङ्क्षया ॥
अवहन्त्यादिभिः शब्दैः कार्यान्वितपदार्थकैः ।
प्रकृतापूर्वसम्बन्धएव स्वार्थो ऽभिधीयते ॥
तथा सति तदीयत्वं तेषां रक्षितुमिच्छता ।
व्रीह्यादिभिः पदैर्युक्ता कार्यसाधनलक्षणा ॥
क्रियाकारकसम्बन्धो ह्यतत्साधनगोचरः ।
शेषिबोधो ऽपि तस्यैव श्रौतत्वाद्यनुसारतः ॥

इति प्रकरणपञ्चिकाया अङ्गपारायणे
सन्निपत्योपकारकपरिच्छेदः ॥

# अङ्गपारायणं नाम प्रकरणम् ।

---

आरादुपकारकं च द्विविधम् । अदृष्टप्रयोजनं दृष्टादृष्टप्रयोजनं च । समिधो यजतीत्यादिष्वस्य कारकगतं किं चित्प्रयोजनं न दृश्यते । तत्र केचित्तावदधिकारापूर्वसिद्ध्यर्थमेषामधिकृताधिकारमिच्छन्ति । ते हि मन्यन्ते उत्पत्तिनियोगास्तावत्समिदादिषु निर्विवादं संमताः । न च नियोगो नियोज्यमन्तरेणाभिधीयते । तथा च सति विश्वजिदादिषु नियोज्यपरिकल्पना न स्यात्तत्र च नियोज्ये कल्पयितव्ये यद्यनुषङ्गः फलपदस्य कल्प्येत यदि वा विश्वजिन्न्यायेन वाधिकारी कल्प्यते तदाधिकारापूर्वस्येतिकर्तव्यताकाङ्क्षा न परिपूर्णेति । न परमापूर्वाधिकारकत्वेनाधिकारिणि सत्युपायोपेयभावो गम्यते । नह्यन्यथाधिकृताधिकारभाव उपपद्यते । यस्य न परमापूर्वसाध्यश्च परमापूर्वाधिकारः । न च यथा स्वर्गकामो यजेतेत्यादौ साध्यस्वर्गविशिष्टाधिकारिणि स्वर्गयागयोरुपायोपेयभावः तथेहापि समिदादिपरमापूर्वयोः । तत्र च न कार्यमन्यार्थमिति न्यायेनाधिकारनियोगैदमर्थ्यमेव समिदादीनामवसीयते । तदिदं ग्राहकग्रहणमिति गीयते तत्रोत्पत्तिविशिष्टाग्नेयादिकरणावरुद्धे परमापूर्वे प्रकारान्तरेणैदमर्थ्यानुपपत्तेरितिकर्त्तव्यतात्वेनैव सम्बन्ध इति । तदिदमुपपन्नमिति प्राभाकराः । यदि सर्वस्य नियोगस्य नियोज्यान्विताभिधानमाश्रीयते । तत्र रा-

जघन्यैकानामिज्याविशेषाणामुत्पत्तिविनियोगानामपि साधिकारत्वं स्यात् । ततो ऽभिषेचनीयतन्त्रमध्ये पठितानां विदेवनादीनामभिषेचनीयावान्तरापूर्वप्रकरणेन तदङ्गत्वं न स्यात् । अथोच्येत नादृष्टार्थं नियोगो नियोज्यान्वितो ऽभिधीयते किं त्वनुष्ठानलब्धये । अभिषेचनीयादयश्च परमापूर्वप्रयुक्त्यैव लब्धानुष्ठानाः परमापूर्वस्यापि तद्विषयत्वात्तेनैव स्वसिद्ध्यर्थं विषयीभूतास्विज्यासु प्रयुज्यमानासु तद्विषयोत्पत्तिनियोगा अपि लब्धसिद्धयो न स्वसिद्धये नियोज्यान्तरमाकाङ्क्षन्तीति । तर्हि प्रयाजादिनियोगा अपि विनियुक्तविषयत्वान्नाधिकारान्तरमपेक्षेरन् । स्यान्मतं विनियोग एव तेषामधिकृताधिकारमन्तरेणानुपपन्न इति । तदसत् । नियोगैदमर्थ्यमात्रेण प्रथमशब्देनावगताधिकारसंबन्धानां प्रकरणेनेतिकर्तव्यतात्वेन विनियोगात् । तथाहि अधिकारविधिसंनिधौ यजतीत्यादयो निरधिकारा एव तावदाम्नायन्ते । तत्र योसावधिकारविधिः स एव प्रयोजनभूतो निरधिकारैः समिदादिभिः स्वयमप्रयोजनभूतैरन्वितः शब्देनाभिधीयते । समिदादिवाक्यानि च द्रव्यदेवताविशिष्टानि यागस्वरूपाण्येव संनिधापयन्ति सन्निधापनमात्रेण तैः सहाधिकारनियोगस्यान्वयः । यदि च सन्निधानं नाद्रियेत तदा समिदादिष्वपि किमिति परमापूर्वाधिकारी कल्प्यते । तदेवं संनिधानमात्रतः सिद्धमुपकारैदमर्थ्यं कथं भवतीत्यपेक्षा । तथा साध्यभूतस्याधिकारापूर्वस्य कथमित्याकाङ्क्षा । तेन करणोपकार एव तेषां द्वारमाश्रीयते । तत्र यदैदमर्थ्येनान्विताभिधानं तद्ग्राहकग्रहणम् । यच्च तेषां करणोपकारद्वारपरिकल्पनं स एव प्रकरणविनियोगः । नन्वेवमवान्तरापूर्वाण्यपह्नुतानि । नापह्नोष्यामहे । यद्यपि प्रथमं लि-

ङादयो न व्यतिरिक्तं नियोगं प्रतिपादयितुमीशते । अवह-न्त्यादिष्ववशङ्क्यमानाधिकारनियोगानुवादकत्वात् । तथा-प्यधिकारनियोगं प्रति एषां क्षणभङ्गिनामवान्तरापूर्वाण्यजन-यतामङ्गतोपपद्यतइति पश्चादधिकारापूर्वाङ्गभावोपपादनायाश्र-यणीया अवान्तरापूर्वाणि लिङाभिधेयान्युपेयन्ते । तदेतद्दीक्ष-णीयावाङ्गियमाधिकरणे व्युत्पादितम् । नन्वेवमाश्रयिष्ववा-न्तरापूर्वाभ्युपगमो यथा तथा तत्रैव वक्ष्यामः । यानि च ता-न्यवान्तरापूर्वाण्यिवतानि शब्दनाङ्गभूतानि अधिकारापूर्वं प्र-त्युपनीयन्ते । नन्वेवं तर्हि दीक्षणीयादिषु वाङ्गियमस्यावान्त-रापूर्वप्रयुक्तता न स्यात् । किं तु प्रोक्षिताभ्यामवहन्तीति त-दपूर्वप्रयुक्ततैवापद्येत । न । तत्स्वरूपनिष्पत्त्यर्थत्वाद्यद्यप्य-वान्तरापूर्वाणां परमापूर्वाङ्गतया भावः तथापि स्वरूपनिष्प-त्त्यर्थ एव वाङ्गियमादिको धर्मः । न दीक्षणीयायामनुब्रूया-दिति दीक्षणीयासंबद्धावान्तरापूर्वस्वरूपसंबन्धावगमात् । न च तेषां स्वरूपपरित्यागेनाङ्गाङ्गिभावलक्षणा युक्ता । लक्षणैव यतः, न च स्वरूपार्थत्वेनानुमानम् । स्वरूपस्यैवानन्यगम्य-सिद्धत्वात् । शब्दैकगम्यसिद्धिकं सर्वमपूर्वमवघातादीनां तु प्रमाणान्तरावसेयसिद्धीनां विनापि प्रोक्षणं स्वरूपसिद्धेः स्व-रूपार्थत्वे ऽयुक्तं नियमनियोगस्यानुष्ठानम् । तदेवं स्वयमङ्ग-त्वाल्लब्धानुष्ठानेषु प्रयाजादिषु नाधिकारकल्पनावकाशः । ते-नैव प्रकारेण प्रधानविषयेषु व्युत्पत्तिनियोगेषु करणावान्तरा-भावो वेदितव्यः । यो हि तमवान्तरव्यापारं नाभ्युपगच्छति तस्य कारणभेदो न स्यात् । दर्शपूर्णमासादिषु तथाग्नेयादि-धर्मा उपांशुयाजादिषु भवेयुः । परमापूर्वप्रयुक्तत्वात्तत्प्रतिस-न्धानभावाविशेषात् । अवान्तरव्यापारभेदे तु युक्ता व्यव-

स्था । अन्यथा आग्नेयस्य करणता । अन्यथा उपांशुयाजादीनामिति । बृहद्रथन्तरयोः स्तुतिसाधनयोरपि अन्यथा साधनतेति धर्मव्यवस्था । तथा पार्वणहोमयोरपि । अत एव विकृतिषु बाधः । नहि यथाग्नेयस्या ऽपूर्वसाधनता । तथा सौर्यस्येति प्रकृतद्वाराभावेन पार्वणहोमयोर्बाधः । ये च सन्त्ववान्तरापूर्वाणि न साधनरूपाणि आचक्षते । न तेषामवान्तरव्यापारतेति प्राचीनसकलदोषप्रसङ्गः । कार्योत्पत्तिनिमित्ताभावेन हि अवान्तरव्यापारता । अन्यथा आश्रमादेरपि कृषिसमुत्पाद्यविलेखनवन्नसस्याधिगमे ऽवान्तव्यापारतापत्तेः । नन्वेवमधिकारशून्यत्वे दीक्षणीयादिष्वतिदेशो न स्यात् । उच्यते । निरधिकाराणामपि कार्यत्वाविशेषादनिर्ज्ञातोपायत्वाच्च युक्तैव कथमित्याकाङ्क्षा । नन्वेवमङ्गीकृतमवान्तरप्रकरणम् । कर्तव्यस्य कथमित्याकाङ्क्षाप्रकरणमिति मीमांसकप्रसिद्धिः । नावान्तरप्रकरणं नाम प्रमाणमस्ति प्रमेयाभावे प्रमाणत्वानुपपत्तेः । यावदेव तान्यवान्तरापूर्वाणि नावगम्यन्ते तावदेव सर्वस्यारादुपकारकस्य पदार्थजातस्याविशेषेण प्रधानविधिपरिगृहीतत्वात् । पश्चात्तु सर्वेषामधिकारानुप्रवेशाविशेषान्नान्योन्यं तादर्थ्यमस्तीति नावातरप्रकरणविनियोज्यसम्भवः । यानि तु वाक्यादिभिस्तेष्ववान्तरापूर्वाणि निवेशितानि तत्र प्रतिष्ठितानि न परमापूर्वं संक्रमिष्यन्ति । नन्वेवं प्रयाजादिषु सौमिकविध्यतप्रसङ्गः । नायं दोषः । यदि निरधिकाराणामपि साधिकाराणामिव स्वारसिकाकाङ्क्षा भवेत् । भवेदेवम् । अननुष्ठेयत्वान्न स्वाभाविकीतिकर्तव्यताकाङ्क्षा । कथं पुनरकार्यताऽननुष्ठेयताच । नूनं भवान् अश्रुतपूर्वः सप्रमादः विविक्तं हि तत्रेदं गुरुणा । यदेव हि पुरुषेण ममेदं कार्यमिति

निरपेक्षमेवावगम्यते तदनुष्ठेयम् । यत्तु तत्सिद्ध्यर्थं प्रागसिद्धं सद्विनियुज्यते तत्कार्यम् । परमापूर्वं च निरपेक्षं कार्यमवगम्यते । कार्यावगमाद्धि फलावगतिः । न फलावगतेः कार्यतेति षष्ठाद्ये क्षुण्णम् । अतः सिद्धो ऽनुष्ठेयकार्यविवेकः । यदेव चानुष्ठेयं तत्रैव कथमित्याकाङ्क्षा न कार्यमात्रे । अवहीनस्तर्हि प्रयाजादीनामेव दीक्षणीयादिषु आकाङ्क्षापह्नवेनातिदेशः । न सम्यगवगतं मतमस्माकं भवता । अयं हि नो राद्धान्तः । स्वारसिकीतिकर्तव्यताकाङ्क्षानिरधिकाराणां नास्ति । कारणान्तरसमुत्था तु नापन्हूयते । तत्र दीक्षणीयादिषु प्रयाजादिदर्शनेनेति कर्तव्यताकाङ्क्षा कल्प्यते । स्वरसतो ऽप्याकाङ्क्षाशून्यस्य कारणान्तरोपनिपातनिबन्धनाकाङ्क्षा । यथा पटो भवतीति निराकाङ्क्षस्यापि पदद्वयस्य रक्तपटोच्चारणाद्रक्तं प्रत्याकाङ्क्षा अन्यथा रक्तः पटो भवतीत्यनन्वयप्रसङ्गः । एवं प्रयाजादिषु न किं चिदाकाङ्क्षोत्थापने कारणान्तरमस्तीति न सौमिकधर्मातिदेशः सिद्धश्च दीक्षणीयादिष्वैष्टिकविध्यन्तलाभः । ये त्वधिकृताधिकाराभ्युपगमेन साधिकारतामङ्गनियोगानामाहुः । तेषां प्रयाजादिषु रात्रिसत्रन्यायेनार्थवादिकफलकाम एवाधिकारी प्राप्नोति इति नाधिकृताधिकारसम्भवः । स्यान्मतमितिकर्तव्यताकाङ्क्षा प्रधानविधेर्न परिपूर्यतइति । मा परिपूरि प्रयोजनं तु परिपूर्णम् । न प्रमाणम् । अर्थवादपदानि प्रमाणांशोपनिपातीनि तेषां परोक्षावृत्तिर्माभूदिति तत्प्रतिपाद्यफलकाम एवाधिकारी युक्तः । साधिकारविधिसंनिधिमात्रेण तु निरधिकाराणां प्रतीतेर्तादर्थ्येऽधिकाराकाङ्क्षा नास्तीत्यर्थवादपदानि अर्थवादमात्रपर्यवसायीन्येव । तथा पयोव्रतं ब्राह्मणस्येत्यादिषु भोजनाय प्रवृत्तस्य द्रव्यार्जन-

नियमवत्स्ववाक्यएवाधिकारिणो लब्धत्वान्न प्रधानप्रवृत्तस्याधिकारकल्पना शक्यते कल्पयितुम् । अथ स्वातन्त्र्यं पयोव्रतादीनामापद्यते । तथा नानृतं वदेदिति । प्रकरणाधीते ऽपि । निषिध्यमानक्रियाकर्तुरधिकारावगमान्न प्रकरणानुप्रवेशसम्भवः । तथा भिन्ने जुहोतीति निमित्तस्याधिकारिविशेषणत्वाद्भिन्ना निमित्तकल्पनादधिकारिविशेषणलाभान्न होमस्य दर्शपूर्णमासाङ्गत्वलाभः । न वेदमिह साधनम् । भिन्नशब्दस्य यौगिकत्वात्प्रकृतिगामित्वे सति निमित्तवतो ऽप्यधिकारे ऽधिकृतस्याधिकार इति । प्रकरणे भिन्नस्य । विनियोगात्तद्धि प्रकरणसंनिहितं यत्तत्र विनियुक्तम् । नच भिन्नस्य विनियोगो ऽस्ति । अपि वाधिकाराकाङ्क्षायामधिकारे कल्पयितुमुपक्रान्ते किमिस्यर्थेन संनिधानेनाधिकारः कल्प्यते वरं भवत्वनुषङ्गः साक्षाच्छ्रुतस्याधिकारपदस्य प्रधानवाक्ये तु श्रुते ऽधिकारपदे प्रधानेन सह संबन्धे सति सन्निहितानामश्रुताधिकाराणां साधिकारैदमर्थ्येनान्वितानामधिकाराकाङ्क्षैव नास्तीति अनुषङ्गनिराकरणे मूलयुक्तिः । अभ्युच्चयमात्रं तु वरमनुषङ्गः । इतिकर्तव्यताकाङ्क्षापरिपूरणमेवेति । अपि च प्रत्येकं समिधो यजतीत्यादिषु प्रधानाधिकृतस्याधिकारावगमात्प्रत्येकमेव समिदादीनां प्रधानोपायभावात् प्रत्येकमितिकर्तव्यताभावः स्यात् । अवान्तरविधयो हि तदा स्वविषयाणामुपायभूतं प्रकल्पयन्ति । करणावरुद्धे परमापूर्वे करणतासम्भवात्करणोपकारजनकतयैवोपायभावकल्पनम् । ततश्चानपेक्ष्योपायभावमाश्रित्यैकस्यैव करणोपकारसंपादकत्वात् विकल्पः समिदादीनां स्यादधिकारिविधिना तु तावत्तादर्थ्यमात्रग्रहणे तस्य तदन्वितस्यान्यथानुपपत्तेस्तादर्थ्यसिद्ध्यर्थं करणोपकारजनकता स्यात्तदा वि-

कल्पे सति नित्यवदन्वयो नोपसंह्रियेत। मिलितानां तज्जनकताश्रयणे सर्वेषां तदन्वयोपसंहार इति न प्रत्येकमितिकर्तव्यताभावः। उपायोपेयभावे तु तादर्थ्येनान्वये सति वैकल्पिकत्वादुपायभावस्य तथैवान्वयो ऽपीति युक्तम्। किं चाधिकृताधिकारेण सर्वेषु साधिकारेषु सत्सु प्रयाजादेरितिकर्तव्यताकाङ्क्षा स्वारसिकीति सौमिकधर्मातिदेशस्तेषु स्यात्। नच वाच्यं सत्यामप्याकाङ्क्षायामितरेतराश्रयतया न तेषु सौमिकधर्मातिदेशः सोमो हि दीक्षणीयाभिरङ्गवान् दीक्षणीयादीन्यैष्टिकधर्मग्राहीणि, यदि चेष्टावपि प्रयाजादिषु सौमिकधर्माः प्रवर्त्तेरन्। तदा स्फुटतरमितरेतराश्रयत्वमिति। तदिदं बालजनजल्पितम्। सोमे हि विनाप्यैष्टिकधर्मप्राप्त्या दीक्षणीयादिमात्रनिबन्धन एवोपकारः तथेष्टावपि सौमिकधर्मनिरपेक्ष एवोपकारः। यदि परमतयोरङ्गनिबद्धयोरुपकारं गृह्णाति अत्र चोपकारक्लृप्तेरविशेषान्न कश्चिद्दोषः। निरधिकारेष्वङ्गेषु न स्वारसिकीतिकर्तव्यताकाङ्क्षा। किंतु लिङ्गबलोत्थापनीयेति दर्शितमादौ। तेन लिङ्गरहितेषु नाकाङ्क्षोदय इति न प्रयाजादिषु सौमिकधर्मातिदेशः। केचिदाहुः यदि संनिधिसमाम्नानमात्रेण प्रकृताधिकारानुप्रवेशो न भवति तदा ज्योतिष्टोमप्रकरणे समाम्नातस्य षोडशिन उत्तरे ऽहनि त्रिरात्रस्य गृह्यतइति वैकृतत्वमेव स्यात्। तदसत्। ग्रहणस्याबाध्यतया ग्राह्यमपेक्षणीयम्। तत्र प्रकृततया लोकतश्च स एव ग्राह्यत्वेनान्वयं याति स च ज्योतिष्टोमाधिकारसंबद्ध इति। तदनुप्रवेशः पश्चात्तु तस्य वाक्येन पुनर्द्विरात्रसंबन्ध इति नानुपपन्नं किं चित्। तदेवमारादुपकारकेषु प्रथमं तादर्थ्येनाधिकारनियोगं प्रसन्वितेषु साधिकारेण विधिनानुष्ठेयभूतेन करणोपकारे क्लृप्ते तं प्रति-

नाधिकारनियोगेन जनकत्वकल्पनम् । नच क्षणिकमात्रे तेषां परस्परं स्वरूपेणासंभवतां संभूयोपकारजनकतामापद्यते इति अवान्तरापूर्वाणि स्वीक्रियन्ते । एवमाश्रयिषु विनाप्यपूर्वेण द्रव्यदेवतासंस्कारमुखेन करणोपकारजनकसिद्धिरिति नापूर्वसमाश्रयणे किं च न प्रमाणं किं च दृङ्गालायां न तत्र दृष्टम् । दर्शितं हि तत्रेदं चतुर्धा तुर्येन साक्षाद्द्रव्यदेवतोपकारो यागः किं तु स्वाङ्गभूतमन्त्राद्यंशमुखेन । न च यागे ऽधिकारानुप्रविष्टे तयोस्तत्र विनियोगोपपत्तिः । न चापूर्वमन्तरेण यागस्याधिकारानुप्रवेश इति अवश्याश्रयणीयमवान्तरापूर्वम् । तेषां चादृष्टतया न प्रयोजनत्वम् । दृष्टतया च द्रव्यदेवतासंस्कार एव प्रयोजकः । तत्रापि द्रव्यदेवतासंस्कारयोर्द्रव्यप्रतिपत्तिरेव प्रयोजिका यागे द्रव्यस्य साक्षाद्व्यापाराविति मन्तव्यम् । द्रव्यस्य तु न श्रुतिविनियोगः । न क्वचिद्द्रव्यस्य द्वारं श्रुतिः समर्पयति । नन्वप्राकरणिको ऽपि द्रव्यस्य विनियोगः साक्षात्करणोपकारजनकत्वाभावात्तस्य लिङ्गेन समाख्यया स्थानेन भावार्थ एव जनकतया संबन्धः । गुणदेवतयोस्तु वाक्ये न विनियोगः । नानाव्यापारत्वात्कारणानाम् । अङ्गसाधनतद्द्रव्योपादाने तदवच्छेदकयाऽस्यैव तयोरुपयोग इति न कारकतया विनियोगो विरुद्ध्यते । यातु भङ्ग्या उत्पन्नकर्मसमवायीया एकादश प्रयाजान्यजतीति उत्पन्नानां कर्मणां विधानासंभवात्कर्माश्रिता विधीयते । यद्यपि चोद्देश्यगतं विशेषणं वाक्यभेदभयेन विवक्षां नार्हतीति । प्रयाजादीनां साहित्यं न विवक्षितम् । तथापि तस्य पृथक्कानिवेशित्वान्न प्रत्येकमभिसंबन्धः । किं तु समुदायेनैव । नचाभ्यासं विना तस्य प्रतिपत्तिरित्यर्थादभ्यासाश्रयणम् । प्राकृतक्रमानुग्रहाच्छन्धा-

धिकारनिधौ च परिपूरणम् । यः पुनरुत्पद्यमानकर्मसमवेतः नासौ विधेयः स हि विधीयमानानि कर्माण्यवच्छिनत्ति । नच तथा विधेयत्वसंभवः । बहुषु विहितेषु समप्रयोगेण परिलभ्यते एवेति न पृथग्विधेयत्वमवलम्बते अविधेयभूतावपि तौ भावार्थाविभिन्दन्न विधावुपकरोतीति स नान्वयी । यस्तु भिन्नप्रातिपदिकाभिधेयः सो ऽरुणिमादिवन्न कर्मणि कारकतया विधीयते । यः पुनरयं विभक्त्यभिधेयः । तस्य यद्यपि शक्त्या प्रातिपदिकार्थसंबन्धः । तथापि तस्य तन्मात्रसंबन्धे प्रकरणसमाम्नानायादितो ग्रहसंबन्धो नोपपद्यतइति ग्राहकीयावस्थासंबन्धितैवौपादानिकीति निर्णीयते विनियुक्तस्य पश्वादेरुपादानमनवच्छिन्नस्य न संभवतीत्यस्ति तदवच्छेदकभूतसङ्ख्यापेक्षा सङ्ख्यायाश्च प्रतीतग्राहकान्वयनिर्वाहायाश्रयापेक्षेति तदवस्थासंनिधितां विधिः कल्पयति । उपादानलक्षणो विधिर्व्यापार आक्षेपापरपर्यायो मीमांसकैः प्रतिपन्नः । उत्पत्त्यधिकारनियोगप्रयोगविषयः प्रतिज्ञायते । तस्य च यथा प्रतीतविध्यनुपपत्तिरेव बीजम् । सौर्यञ्चरुं निर्वपेदित्यादौ साधिकारो विधिः प्रसङ्गत उत्पत्तिं विनानुपपद्यमानः उत्पत्तिमाक्षिपति । नहि क्षणिकं यागमात्रमुत्पत्तिनियोगानपेक्षमधिकारसिद्धिसमर्थमिति बहुशोक्तं विश्वजिदादिष्वधिकारमन्तरेणानुष्ठानासंभवात्क्वार्यरूपस्य विधेरवगतस्यानुपपत्तिरधिकारकल्पनाबीजम् । सङ्ख्यान्वितश्च विध्यर्थः प्रतीतः तदन्वयोपपत्तये ग्राहकीयदशासंबन्धितामापादयति । निमित्तएवेति यो ऽधिकारे साध्यभूतो विधिरनुष्ठानापरनामालङ्करणस्य प्रयोजनमाक्षिपति । कामाधिकारे तु कामसिद्धिस्तदायत्तत्वान्मानसीप्रवृत्तिः प्रागेव प्राप्तानुष्ठानप्रवृत्तावप्यप्रतिहता निमित्ततास्तीति विधिरप्रयो-

जकः । उभयत्राङ्गेषु क्रतुरेव प्रयोजकः । क्रतूपकारद्वारत्वात्तेषाम् । यदत्र हि यस्य कार्यं तदेव तस्य प्रयोजकम् । क्रतूपकारश्चाङ्गानां कार्यमेतदेवानुष्ठाननिमित्तं यच्च विधिना स्वसिद्ध्यर्थमाक्षिप्यते तद्विधेयमिति तत्त्वज्ञाः । नन्वेवं विश्वजिदादावधिकारो ऽप्याक्षिप्ततया विधेय एव स्यात् । उच्यते । नाधिकारस्य नियोगसिद्धौ व्यापारः । किंतु कर्तृत्वस्य यत्प्रतिपत्त्यर्थश्चाधिकारापेक्षः इति एवं च विधिना स्वसिद्ध्यर्थमनाक्षिप्यमाणत्वान्न क्रमो विधेय इति मीमांसकानामुद्धारः । क्रमस्य पाञ्चमिकस्य न किं चिदभिधानमस्ति न चानभिहितस्य तस्य वैनियोगिकमौपादानिकं वा शेषत्वं घटते । न वा शेषभूतस्य विधिराक्षेपाय प्रभवति । यस्तु वषट्कर्त्तुः प्रथमभक्ष इति प्रथमशब्दाभिधेयः क्रमः स हि विनियोज्यो विधेयश्चेतिनिबन्धनकारः । अत एवासौ न नीलीयेतेति ततः पञ्चमे हिं यस्तावच्छ्रौतक्रमः अध्वर्युर्गृहपतिं दीक्षयित्वेसादौ न तस्य किं चिदधिभानमस्ति । कथं तर्हि प्रतीयते । क्त्वाप्रत्ययो ऽपि हि समानकर्तृकेऽर्थे वर्तमानाद्धातोर्विधीयमानो ऽपि य एव प्रथमं प्रयुज्यते तत एव विधीयते तत्र क्त्वाप्रत्ययश्रवणात् । अथ वा प्रयोज्यत्वे स्थिते ऽर्थवित्तिरपि तथैव । यथा प्रयोगवाचित्वादर्थावगते यथावगति चानुष्ठानमिति क्रमो ऽपि तथाविध एवावगम्यते । अर्थादिष्वभिधानशङ्कारूपवदेव । अनभिधीयमानस्याप्यवगत्युपायभावस्तत्र तत्र प्रमाणे चिन्तित एव । यदि विध्यर्थं प्रति शेषत्वं क्रमस्य नास्ति । कथं तर्हि चोदनालक्षणत्वम् । न विधेयता चोदनालक्षणत्वे हेतुः । अधिकारस्य तदभावप्रसङ्गात् । अविध्यर्थस्तदन्वितः प्रतिपाद्यत इति चोदनालक्षणम् । तर्हि क्रमान्वितो ऽपि प्रयोगविधिरव-

सीयते इति तस्यापि चोदनालक्षणत्वमविरुद्धम्। क्रमविशेषपरिगृहीतप्रयोगावच्छिन्नो हि प्रयोगविधिः प्रतीयते। अत एवानङ्गत्वोपक्रमनियमस्य तदादरः। तदभावे प्रयोगानुपपत्तेः प्रयोगविधेश्च विशिष्टप्रयोगसाध्यत्वात्। तदेवं द्विविधर्मौपदेशिकत्वं वैनियोगिकमौपादानिकञ्च। तत्र न यथाधिकारं विनियुज्यते। अपि तु यथाविनियोगमधिकारः सामान्यतोऽप्यधिकाराश्रयणेन विनियोगसिद्धेः। यस्यापि प्रतिप्रकरणं व्यवस्थासिद्धये ग्राहकपूर्वको विनियोगः। यद्यपि च साधिकारस्यैव ग्राहकत्वम्। तथापि सामान्यतः स्वर्गकामादावधिकारिणि लब्धे साधिकारत्वे संपन्ने ग्राहकग्रहणे निवृत्ते नियुक्तेष्वङ्गेषु तदवच्छिन्ने विध्यर्थे कार्यात्मनि तदनुष्ठानसमर्थस्य स्वर्गकामिनोऽधिकार इति पश्चादधिकारिविशेषनियमः। अत एवान्धवधिरपङ्ग्वादीनामवेक्षणश्रवणातिक्रमणाद्यङ्गवति पञ्चार्षेयाणामार्षेयत्रयवरणलक्षणाङ्गभाजि आहवनीयादियोगिनि चानाहिताग्नीनामनधिकारः। तेषां तथाविधविध्यर्थसंपादने स्वाभाविकशक्त्ययोगादिति स्वयमूहनीयम्। येषां च न स्वाभाविकीशक्तिरपेता। तेषामधिकारो भवत्येव। अद्रव्याणामसमाधेयव्याधिविशेषपरवशेन्द्रियाणां च। ननु तेषामधिकारो न निर्वहत्येवापूर्वसिद्धिनिबन्धनत्वात्तस्य। तस्याः सकलाङ्गग्रामायत्तत्वात्। सत्यम्। कामाधिकारो न भवत्येव। तस्य सेतिकर्तव्यताकफलभावनाकरणविषयत्वात्फलकामस्य हि फलभावनां प्रति एककरणीभूते ऽधिकारो नावकल्पेत सर्वं च करणं सेतिकर्तव्यताकं करणतामनुभवतीति संमतम्। ततः साङ्गाननुष्ठाने सेतिकर्तव्यताकत्वम्। व्याघाताद्विषयाभावाद्विषयिणो ऽप्यनुपपत्तेरधिकारविलय एव कामिनाम्।

निमित्ततश्च केवलभावार्थविषय एवाधिकार इत्यङ्गानुपसंहारे ऽपि विषयप्रमोषान्नाधिकारावगमः । अनपेतश्चाधिकारो यावदुपसंहरणीयाङ्गसंपाद्यतामेव तदानीमवगमयति। औत्सर्गिकी तु सकलाङ्गायत्तसिद्धि-सिद्धैव । अनेनैवाधिकारेण निमित्ताधिकारे गौणो मुख्यश्च शास्त्रार्थ इति प्राभाकराणामुल्लापः । अस्ति च किं चिदङ्गं निमित्तायत्तविधानम् । तत्सत्यमेव । निमित्तेऽङ्गं यथा भिन्ने जुहोतीति तत्र चैष शास्त्रार्थः। सति भेदने भेदनहोमसहितो ऽङ्गकलापः करणोपकारं कुर्वन्कार्यमारूढ इति। तदल्पत्वे तु एकल एवेति । यावच्च भेदादिकमावर्तते तावती होमस्यावृत्तिः । एष तावदौपदेशिको ऽङ्गकलापः कार्यनिबन्धनं के चिदन्ये मीमांसका मन्यन्ते । उपदेशो हि प्रतिप्रकरणमङ्गानां व्यवस्थित एव । अपूर्वग्रहणपूर्वकत्वाद्विनियोगस्य । यदि हि दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेत्यनेन साधिकारं यागमुद्दिश्य समिधो यजतीति समिदादिविधिः स्यात् । तदानीमेवमुद्दिश्य विधानाद्यावद्यागमेव समिदादिविधिरिति यजिमत्सु सर्वापूर्वेषु समिदादिविधानादुपदेशो न व्यवतिष्ठेत । नहि तदा स्वर्गकामपदं दर्शपूर्णमासपदं च विशेषायातम् । उद्दिश्यमानविशेषणाविशेषणविवक्षायां वाक्यभेदापत्तेः । संनिधानमात्रेण त्वन्विताभिधानसिद्धेर्दर्शपूर्णमासाभ्यामित्यधिकारवाक्यस्थत्वे सति समिदादीनां तदनुप्रवेशाद्विनियुक्तविषयतया प्यनुष्ठानसंपत्तेर्दर्शपूर्णमासाभ्यामित्यधिकारद्वारपरिकल्पनम् । तत्र चोपादानलक्षणेन विधिव्यापारेणाङ्गानां समुदितानामुपकारकत्वपरिकल्पनमिति प्रतिप्रकरणमङ्गव्यवस्था । क पुनः केषां कार्यनिबन्धनमङ्गत्वम् । प्राकृतानां वैकृतापूर्वेषु तदीयकरणे च यथायथमतिदेशमाचक्षते । प्राकृतानां प्राकृतस्थान-

प्रतीते ऽर्थान्तरसमूहमभिदधति द्विविधशाब्दमुपदेशकं कार्यकं च । तत्र वैकृतापूर्वस्य साध्यभूतस्य सेतिकर्तव्यता ऽऽकाङ्क्षस्य विषयीभूते भावार्थे करणे लब्धे या परेतिकर्त्तव्यताकाङ्क्षा तस्यां च न प्रकृतिवदुपकारान्तरकल्पनोपपद्यते । क्लृप्तेत्युपकारान्तरे तज्जनकद्विविधपदार्थाकाङ्क्षा पश्चात्तनी सा प्रकरणानधीतपदार्थवर्गसम्बन्धेन न परिपूर्यते । प्राकृते तूपकारे स्वीकृते तत्तन्मुखेन द्विविधप्राकृतपदार्थोपस्थापनादाकाङ्क्षा परिपूर्यते इति प्राकृतमेवोपकारं स्वीकरोति । कः पुनर्हेतुः स्वीकरणे नानुमानम् । अव्यभिचरितलिङ्गसम्बन्धाभावान्नोपपन्नम् तस्य सादृश्यमात्रविषयत्वातिसद्धविषयावगाहिनोश्चानयोः कार्यप्रमाणानवतारात् । उच्यते । य एवासौ विनियोगाभिधायी लिङादिशब्दः स एव प्राकृतो प्रकारान्वितं स्वार्थमभिदधाति । प्रकृतावपि विध्यर्थपरिकल्पितोपकारिणान्वितं स्वार्थं लिङादिरेव वक्ति । अन्विताभिधाने चाकाङ्क्षायोग्यतासंनिधिश्च कारणम् । इह च प्राकृतस्योपकारस्यैवैवाकाङ्क्षायोग्यता च तावदविवादा । संनिधानं तु बुद्धेन प्राकृतनैवापूर्वेण लिङ्गविशेषेण प्राकृतमपूर्वं बुद्धौ संनिधीयते तच्च स्वोपकारं संनिधापयति । अत एवोपकारसम्बन्ध औपदेशिक इति तत्त्वविदः । यो हि ग्रन्थेन विध्यर्थेनैवोपस्थापितस्तस्मिन्नन्वयमेति स औपदेशिकः । प्रकृताविवोपकारः यथा विश्वजिदादावधिकारी । तदेवमुपकारसम्बन्धमुपेतः केन पदार्थवर्गेण जन्यत इति पश्चात्तस्यैव वैकृतस्यापूर्वस्याकाङ्क्षा भवति । ननु प्रकृतावात्मोपकारो निर्ज्ञातजनकभुतपदार्थवर्ग इति नाकाङ्क्षोदये कारणमस्ति । अत एव पदार्थानामतिदेशो नेति मन्यते । यदि पदार्थेष्वपि पश्चाद्भाविन्याकाङ्क्षा तदा तद्धेतुके

प्राकृतानां वैकृतापूर्वसम्बन्धे सति । को नामोपकारस्यैव पदार्थानामतिदेशं वारयेत् । अन्यत उत्पन्नस्य ह्यन्येन सम्बन्धोऽतिदेश इत्यतिदेशविदः । अत्र ब्रूमः । यदि करणोपकारप्रयुक्ताः प्रकृतौ पदार्थाः स्युः । तदा निर्ज्ञातेषु जनकेषु पदार्थाकाङ्क्षा नावतरेत् । अपूर्वप्रयुक्तास्तु धर्मा इति मीमांसकाः । तथा सति यदपूर्वप्रयुक्तास्ते धर्मास्तत्संबन्ध एवोपकारे तेषां जनकता कल्पिता नान्यसंबन्धे । अतो वैकृतापूर्वसंबन्धस्यानिर्ज्ञातोपायस्योपेयाकाङ्क्षा नानुपपन्ना । येषां न प्रकृतिसाधनभावेन पदार्थानामनुष्ठानमेव केवलम् । तेषामौपदेशिकत्वादुपकारसाधनभावस्योहबाधौ न स्याताम् । आकाङ्क्षानिबन्धनेन प्रकृत्यपूर्वसंबन्धे यथोहबाधौ सिद्ध्यतः तथा तत्रैव वक्ष्यामः । एवं च सत्यां पदार्थाकाङ्क्षायां पश्चादुपकारेण ये प्राकृताः पदार्था बुद्धिविषयतामापद्यन्ते ते ऽन्वयमासादयन्ति केन पुनः संबन्धेनोपकारस्तानुपस्थापयति । उच्यते । प्रकृतौ तेषां पदार्थानां तस्य चोपकारस्य जन्यजनकभावः प्रतीत इति तथापूर्वप्रतीत्या स्मृतिस्तेषु जायते । तेषु स्मृतिसंनिहितेषु लब्धान्वयेषु यथा प्रकरणाधीतेषु पश्चादुपकारसाधनत्वं मिलितानां साधनत्वं कल्प्यते । तदाहुः । वैकृतं पदार्थवर्गं प्राकृतमुपकाराढौकितम् । तथाविरुपकारे साधनमेकीकृत्य कल्पयति उपकारलक्षणकार्योपस्थापितप्राकृतपदार्थान्वयजातं च विकृत्यपूर्वकार्यकं शाब्दमुच्यते । न च पदार्थानामपूर्वान्तरसंबन्धो ऽनुपपन्नः । अन्यदीपस्यान्यसंबन्धाभावादिति । तद्भावेनोपकारे ऽन्विते तज्जनकाकाङ्क्षायां कार्यतोन्वयावगमात् । अर्थश्चायमतिक्षुण्णऋजुविमलादिषु । तत्र प्राकृतानां संस्काराणां प्राकृतद्रव्यस्थानपतितपदार्थसम्बन्धनिश्चय ऊहापरनामापि कार्यरूपवशात् ।

प्रकृतौ यत्कार्यं प्रतीतमवघातादीनां तदेवेदमिति निश्चये सति यदपूर्वा ह्यवघातादयस्तदीयतण्डुलोत्पत्तिप्रकृतिद्रव्यमवघातादिभिः संस्कार्यमिति प्रकृतौ शास्त्रार्थः। विकृतावपि तादृशा एव नीवारादयः इति धर्मोहस्तेषु। एवं कृष्णलादिष्ववघातादिषू-हितेषु द्वारभूतकार्याभावे च यो बाधनिश्चयः। सो ऽपि कार्यक-एव तदेवं तद्विना बाधिताभ्युचितपदार्थजन्यप्राकृत उपकारो विकृताविति स्थितम्। तेषां चौपदेशिकानां कार्यसंबद्धाना-मनेकप्रधानसंबन्धे प्रयोगविशेषे तन्त्रमनुष्ठानम्। तथा देश-कालकर्तॄणां प्रयोगानुबन्धभूतानां भेदो नावसीयते कार्यस्य वा। भिद्यमाने तु कार्ये कार्यार्थमनुष्ठानमावर्ततएव देशादि-भेदे ऽपि प्रयोगभेदावगमात्, आवृत्तिरेवानुष्ठानस्य। यस्य च परार्थमनुष्ठितस्यापि कार्यं तन्त्रमिह्यवगम्यते। तस्यान्यत्राप्यु-पकारकत्वमेवेति सकृदनुष्ठानमिति।

नानामितविषयाणां विधिसिद्धौ निमज्जताङ्गानाम्।
प्रविततगम्भीराणां पारायणमेतदाचरितम्॥

इति प्रकरणपञ्चिकायामङ्गपारायणं समाप्तम्।

# प्रकरणपञ्चिकायाम् ।

## अतिदेशपारायणं नाम प्रकरणम् ।

विकृतौ ये पदार्थानामतिदेशं न मन्वते ।
करणस्योपदेशं च तेषामुत्तरमुच्यते ॥ १ ॥
प्राकृतेनोपकारेण पदार्थैश्चैव वैकृतः ।
प्रयोगविधिना स्वेन विधिरन्वित उच्यते ॥ २ ॥
पदार्थदाकाङ्क्षितं योग्यं संनिधानं प्रपद्यते ।
तेनान्वितो हि विध्यर्थः स्वशब्देनैव भण्यते ॥ ३ ॥
साध्यभूतश्च विध्यर्थ उपकारमपेक्षते ।
तिबादिभिः प्राकृतश्च स योग्यः सन्निधाप्यते ॥ ४ ॥
अन्यथा ऽनवगम्यत्वाद्यद्यप्यङ्गपुरःसरः ।
उपकारः प्राकृतो ऽसौ विकृतौ संनिधाप्यते ॥ ५ ॥
तथा ऽप्यपेक्षितत्वेन प्रकारं प्रथमं विधिः ।
स्वीकरोति पदार्थास्तु प्रतीतानप्यपेक्षते ॥ ६ ॥
पश्चात्तु तैरपि पुनरुपकारप्रसिद्धये ।
अपेक्षितैस्तद्वशेन प्राप्तैरन्वयमृच्छति ॥ ७ ॥
गुणप्रधानभावेन सर्वत्रैवान्वयो मतः ।
प्रधानं च विधिर्धर्मा गुणास्तं प्रति संमताः ॥ ८ ॥
अन्वितस्याभिधानं च न शब्दोपस्थितैः परम् ।
दर्शनात्पितृयज्ञादौ कल्प्येनाप्यधिकारिणा ॥ ९ ॥
संबन्धिना न सर्वेण सहसैवान्विताभिधा ।

संबन्धिनां संनिधानक्रमेण तु यथायथम् ॥ १० ॥
प्रकृतौ तु स्वशब्दत्वात्पदार्थानां पुरोन्वयः ।
उपकारस्य कल्प्यस्य पश्चादिति परं भिदा ॥ ११ ॥
व्युत्क्रमेणोपकारेण पदार्थैश्चैव वैकृतः ।
प्राकृतैर्विधिरन्वेति सो ऽतिदेशश्च सम्मतः ॥ १२ ॥
यस्य देशे विधिर्यस्मिंस्ततो ऽन्यत्रापि तद्गतिः ।
अतिदेशः प्रकारस्य धर्माणां चैव युज्यते ॥ १३ ॥
अन्यत्रस्थो यथा ऽन्यत्र प्रकारो ऽन्वयमृच्छति ।
तथा धर्मा अपीष्यन्ते तेषामप्यतिदेश्यता ॥ १४ ॥
नन्वेवं दशमाद्येन विरोधस्तु प्रसज्यते ।
नैवं कार्यानपेक्षो ऽसावतिदेशो निवारितः ॥ १५ ॥
तद्द्वारेण संबन्धो धर्माणामेव चेद्भवेत् ।
अनपेक्ष्यप्रकारत्वात्तदा बोधो न सिध्यति ॥ १६ ॥
प्रकृतौ हि पदार्थानां सम्बन्धे ऽवगते यथा ।
द्वारं दृष्टमदृष्टं वा सम्बन्धार्थं प्रकल्प्यते ॥ १७ ॥
कार्यानपेक्ष्यसम्बन्धे तथैवावगते सति ।
द्वारं दृष्टमदृष्टं वा कल्प्यं स्याद्विकृतावपि ॥ १८ ॥
ततो न घटते बाधः कार्यलोपनिबन्धनः ।
दृष्टाभावे ऽप्यदृष्टस्य द्वारस्य खलु सम्भवात् ॥ १९ ॥
कार्यापेक्षा यदा धर्मा विकृतौ यान्ति सङ्गतिम् ।
तदा कार्यविलोपेन तेषां बाधः प्रसिद्ध्यति ॥ २० ॥
प्राप्नुवन्तो हि कार्येण धर्मा द्वारसमन्विताः ।
प्राप्नुवन्तीति न द्वारकल्पनावसरस्तदा ॥ २१ ॥
क्लृप्तद्वारविलोपेन तेषां बाधः प्रमाणवान् ।
अतिदेशेन धर्माणां प्राप्तानामपि सिद्ध्यति ॥ २२ ॥

कार्यानपेक्षसम्बन्धो धर्माणामुच्यते यदि ।
दशमाद्यविरोधः स्यात्तदानीं न च तत्तथा ॥ २३ ॥
तद्भावेन न किं धर्माः प्रकारो वापि गृह्यते ।
इत्येषा दशमाद्ये हि चिन्ता बाधप्रसिद्धये ॥ २४ ॥
पूर्वपक्षी च तत्राह पदार्थानां परिग्रहम् ।
नोपकारे हि धर्मेभ्यो विना शक्यं निरूपणम् ॥ २५ ॥
यद्यप्याकाङ्क्षति विधिः प्रकारं प्रथमं स्वयम् ।
तथापि तस्य प्रकृतावपि नैव स्वरूपतः ॥ २६ ॥
परिज्ञानं किं तु यथाश्रुतैर्धर्मैस्तथैव हि ।
तस्मात्पदार्थपूर्वैव सदा तस्या निरूपणा ॥ २७ ॥
अतः पूर्वप्रतीतत्वात्पदार्थैरेव वैकृतः ।
विधिः सम्बन्धमाप्नोति तान्गृहीत्वा तु स स्वयम् ॥ २८ ॥
उपकारं प्रकृतिवत्कल्पयत्यात्मसिद्धये ।
अतश्च प्राकृते द्वारे लुप्ते बाधं तु नार्हति ॥ २९ ॥
राद्धन्ती तु वदत्येवं सत्यं धर्माः पुरः सराः ।
तथापि तेन गृह्यन्ते तदानीमनपेक्षणात् ॥ ३० ॥
प्रकारं हि पुनः साध्यरूपो विधिरुपेक्षते ।
न पदार्थानितिं हि तान्प्रतीतेनाप्युपेक्षते ॥ ३१ ॥
प्रकारेणैव सम्बन्धे प्रथमं प्रतिपद्यते ।
प्रकारकल्पितैः पश्चात्पदार्थैरिति दर्शितम् ॥ ३२ ॥
धर्माणामन्यदीयानां कथमन्यत्र सङ्गमः ।
इति चेदुपकारेऽपि तुल्यमेतद्यथोच्यते ॥ ३३ ॥
नोपकारस्य संबन्ध इति हास्यमिदं वचः ।
यद्यसौ नान्यदीयः स्यात्कथं तर्ह्यतिदिश्यते ॥ ३४ ॥
अन्यत्र ह्यन्यदीयस्य देशोऽतिदेश उच्यते ।

तद्वद्भावेन तत्प्राप्तौ विरोधश्चेन्न विद्यते ॥ ३५ ॥
तद्वद्भावोपपत्त्यर्थं पदार्थेऽपि तत्समम् ।
प्रतिपत्तिविरोधोऽयमन्यदीयान्यसङ्गमे ॥ ३६ ॥
मुखान्तरेण सम्बन्धे स च नास्ति कथञ्चन ।
ये तु नेच्छन्ति धर्माणां सम्बन्धं वैकृतैः सह ॥ ३७ ॥
अपूर्वे प्राकृताङ्गानां ग्रन्थस्तेषां विरुद्ध्यते ।
सप्तमाष्टमयोस्तेषां प्रकारप्राप्तिचिन्तनम् ॥ ३८ ॥
न युक्तं तत्र चिन्ता हि षट्के ऽस्मिन्कार्यबन्धना ।
नियोगो ऽप्यथ कार्यं चेत्तदर्थमपि चिन्त्यते ॥ ३९ ॥
चतुर्थाध्यायचिन्तापि षट्के ऽस्मिन्नापतेत्तथा ।
कार्यतो ह्युपदेशार्थाद्विध्यर्थाद्यत्प्रतीयते ॥ ४० ॥
यथा तस्योपदिष्टत्वं तथाध्यक्षेण वक्ष्यते ।
तेन विध्यर्थमुत्सृज्य कार्यमन्यत्समाश्रितम् ॥ ४१ ॥
द्वारभूतमियं चिन्ता कार्यषट्के विधीयते ।
अतिदेशः पदार्थानां तेन षट्के ऽत्र चिन्तितः ॥ ४२ ॥
तस्यैव हेतुभूतः स उपकारो ऽपि दर्शितः ।
षड्भिर्दीक्षयतीत्यत्र प्राकृतानां च वैकृतः ॥ ४३ ॥
अङ्गभूतैरनङ्गानां बाधश्चैवं प्रसज्यते ।
प्रधानबोधबाह्यत्वादुपकारप्रसिद्धये ॥ ४४ ॥
नैव प्रयुक्तिमात्रेण क्रियते प्राकृतं पुनः ।
अतः कार्यातिदेशो ऽयं सम्मतस्त्वौपदेशिकः ॥ ४५ ॥
उपदेशप्रमेयेण विध्यर्थेनोपकल्पितः ।
प्रकृतावुपकारस्य यदपूर्वेण कल्पना ॥ ४६ ॥
नियोज्यस्य च वृद्धानामुपदेशेन सम्मता ।
उपदेशो हि नामात्र ग्रन्थसन्दर्भ उच्यते ॥ ४७ ॥

स च प्रमाणं विध्यर्थे कार्यरूपे ऽवधारितः ।
यो ऽर्थः प्रतीयते यस्मात्स परं नौपदेशिकः ॥ ४८ ॥
विध्यर्थः स्वप्रतीत्यर्थं यमाक्षिपति सो ऽपि च ।
अपर्यवस्यन्विध्यर्थो ऽयं प्रकल्पयितुं क्षमः ॥ ४९ ॥
औपदेशिकता युक्ता तस्याप्यक्षबोध्यता ।
उपकारविशेषं च विधिः कल्पयितुं क्षमः ॥ ५० ॥
न पदार्थविशेषं तु वैकृतः प्राकृतो यथा ।
उपकारविशेषस्य कल्पनायां क्षमो ऽपि यत् ॥ ५१ ॥
प्रकृतेरेव गृह्णाति लाघवं तत्र कारणम् ।
क्लृप्तकल्प्यविरोधे हि लघुः क्लृप्तपरिग्रहः ॥ ५२ ॥
स्ववाक्यानामलिङ्गैश्च क्लृप्तो ऽसौ संनिधाप्यते ।
पदार्थभेदप्राप्तिस्तु नोपकारं विना भवेत् ॥ ५३ ॥
तत्प्राप्तेः कार्यतस्तेषां प्रकारश्चोपदेशतः ।
विकृतौ कार्यतो धर्माः प्रकारश्चोपदेशतः ॥ ५४ ॥
उपदिष्टे ऽपि च वैतस्मिन्नतिदेशपदाभिधा ।
निवार्यते ऽस्ति तस्यार्थे देशे ऽन्यत्वं निजाद्विधेः ॥ ५५ ॥
उपदिष्टातिदिष्टत्वं न त्वेकस्य विरुध्यते ।
नोपदेशातिदेशौ हि प्रमाणे इति संमते ॥ ५६ ॥
उपदेशातिदेशौ हि प्रमाणे भवतो यदि ।
तदा विरोधो जायेत न चैवमिव संमतम् ॥ ५७ ॥
तेनोपदेशमेयत्वादुपदेशत्वमिष्यते ।
अन्यस्मिन्नन्यताभावादतिदेशो ऽपि युज्यते ॥ ५८ ॥
उपदेशः कार्यरूपप्रमाणद्वयसंश्रयौ ।
षड्भावुभौ नोपदेशमतिदेशं च संश्रितौ ॥ ५९ ॥
अतिदेशाश्रयत्वे हि बाधे तन्त्रेच भूयसी ।

उपदिष्टार्थविषया चिन्ता नैवोपपद्यते ॥ ६० ॥
द्वारकार्याश्रयत्वे तु सर्वासामुपपन्नता ।
चिन्तानामिति चिन्तेह युक्ता कार्यसमाश्रया ॥ ६१ ॥
नन्वेवमुपदिष्टत्वं पदार्थानां प्रसज्यते ।
कार्यवत्त्वैरपि यतो विध्यर्थो ऽन्वित उच्यते ॥ ६२ ॥
उच्यते शाब्दतैवं स्यान्नोपदेशप्रमेयता ।
प्रमाणद्वयभेदो ऽयमुपस्थाननिबन्धनः ॥ ६३ ॥
उपदेशोपस्थितो यो वाक्यार्थान्वयमृच्छति ।
स औपदेशिको ज्ञेयः स च द्वैधमुपस्थितः ॥ ६४ ॥
ग्रन्थेनोपस्थितश्चैव विध्यर्थोपस्थितस्तथा ।
यथोपकारः प्रकृतौ नियोज्यो वा श्रुतो यथा ॥ ६५ ॥
प्रकारोपस्थितो यश्च द्वेधा नासावुपस्थितः ।
तेनौपदेशिको नासौ केवलं कार्यबन्धनः ॥ ६६ ॥
पूर्वनिबन्धनिबन्धनमपनेतुं सम्यगीहमानेन ।
शालिकनाथेन कृतः कृतिनामानन्ददो यत्नः ॥ ६७ ॥

इति श्रीशालिकनाथमिश्रविरचितायां प्रकरणपञ्चिकायाम-
तिदेशपारायणं नाम प्रकरणं संपूर्णम् ॥ (21-12-33)
समाप्ता च प्रकरणपञ्चिका ।

शा० श० १८५५ श्रीमुखपुष्यशु १४। गुरौ हरिगुरानारब्धा।

प्रकरणपञ्चिकापूर्तिः ।

## मीमांसाजीवरक्षा नाम
## दशमं प्रकरणम् ॥१०॥

प्रभाकरगुरोर्भावं परिभाव्याभिधीयते ॥
मीमांसाजीवरक्षेयं क्षणिकत्वनिराक्रिया ॥ १ ॥

अत्र सुगतमतानुसारिणः क्षणभङ्गिनः सर्वानेव भावानभिदधति। किं पुनस्तेषां तत्र प्रमाणम् । न तावत् प्रत्यक्षं क्षणिकतामीषितुं क्षमते । स्तम्भादिभावविषये निपुणतरनिरीक्षमाणस्य क्षणिकत्वाध्यवसायाभावात् ॥ स्यादेषा मनीषा— न क्षणिकता नाम भावस्वभावाऽत्रहिर्भाविनी तेन भावानुभावादेव प्रत्यक्षं क्षणिकतामपि साक्षात्करोतीति। तदिदं मनोरथमात्रं मन्यन्ते मतिमन्तः। तथाहि। संविन्निष्ठा विषयव्यवस्थितय इति स्थितिरियमविवादा सर्ववादिनाम्। तदियमपि क्षणिकता भावस्य स्वभावभूता सती संवित्तिमधिरोहन्ती तदव्यतिरेकेण व्यवतिष्ठते, नान्यथा । न च तथा संविदमुदीयमानामुदीक्षामह इति कुतस्तस्या भावस्वभावान्तर्भाविता। कुतस्तराञ्च तदवबोधेनाववोधः । अथ मन्वीरन्— क्षणिकता प्रत्यक्षमीक्षितापि न निश्चयपथमवतीर्णा, तेनागृहीतेवावभातीति । तथापि न तस्याः प्रत्यक्षं प्रमाणम् । यत्र हि प्रत्यक्षस्य स्वभावतो विकल्पविरहिणः पृष्ठभाविना सविकल्पकप्रत्ययेन व्यापारोऽनुगम्यते, तत्र प्रत्यक्षं प्रमाणमिति सौगताः। यत्र च दृष्टमेतद् इति प्रत्ययो नोदीयते न तत् प्रत्यक्षमिति स्वतः सिद्धान्तध्वान्ताक्रान्ताशयानां वाङ्मात्रविलसितम् ॥ यदपि केचिदूचिरे— प्रत्यक्षं ज्ञानं क्षणिकम्, स्वकालाकलितवस्तुविषयतया क्षणिकतामवगमयतीति । तदपि बालिशभाषितम् । एकक्षणमात्रवर्त्तिता हि क्षणिकता । न तत् प्रत्यक्षेणेदानीमेव व्यवस्थितेति प्रतिपद्यते। कालान्तरं प्रत्यौदासीन्यात् । प्रत्युत प्रत्यभिज्ञालक्षणं प्रत्यक्षमेव क्षणिकतां दूरमुपाक्षिपति । पूर्वापरकालाकलितभावावकल्पनात् । अनुमानमपि सम्बन्धानुसन्धाननिबन्धनं क्षणिकतां न पक्षीकर्तुं क्षमते। तया सह कस्यचिल्लिङ्गस्य सम्बन्धबोधविरहात्। न खल्व-

ऽप्रतीते सम्बन्धिनि सम्बन्धबुद्धिराविर्भवति । न चैतदुभयातिरेकि प्रमाणं सुगतमतानुसारिणो मन्यन्ते ॥

तदिदमाकाशभ्रान्तमित्यपहसन्ति सौगताः । ते हि स्वभावहेतुकानुमानसमधिगमनीयां क्षणिकतामाचक्षते । किं पुनस्तदनुमानम् । यत् सत् तत् क्षणिकम् । सन्तश्च सर्वे भावा इति । भावमात्रानुबन्धिनि सम्बद्धे स्वभावो हेतुर्भवति । यथा शिंशपात्वं वृक्षत्वे । शिंशपामात्रानुबन्धि हि वृक्षत्वम् । तथेहापि सत्तामात्रानुबन्धिनी क्षणिकता । कथं पुनस्तन्मात्रानुबन्धसिद्धिर्विपक्षे साधकप्रमाणप्रवृत्तेः । अक्षणिके हि व्यापकानुपलब्धिः सत्तां बाधते । अर्थक्रियाकारिता हि सत्ता, नापरा काचिदस्ति । सा च क्रमयौगपद्याभ्यां व्याप्ता तृतीयराशिविरहात् । अनयोः परस्परप्रतिपक्षतयैकप्रतिषेधस्येतरविधिनान्तरीयकत्वात् । न च क्रमयौगपद्ये अक्षणिकेषु सम्भवतः । ते तु निवर्तमाने सत्तामपि निवर्त्तयतः, वृक्षत्वं शिंशपात्वमिव । कथञ्च क्षणिकेषु क्रमयौगपद्याभ्यामर्थक्रियाविरहः । अत्राहुः । अक्षणिको हि भवत् किमर्थक्रियाजननस्वभावो भवेत् । अतः स्वभावो वा नापरः प्रकारोऽस्ति । तत्राग्रिमपक्षपरिग्रहे सर्वासामर्थक्रियाणामेकस्मिन्नेव क्षणे कृतकत्वात् । कृतस्य च करणानुपपत्तेः । अनन्तरक्षणेऽर्थक्रियासामर्थ्यशून्यत्वादसल्लक्षणत्वापत्तेरक्षणिकत्वहानिः । द्वितीयविकल्पावलम्बने तु क्वापि ततोऽर्थक्रियानोदीयत इत्यसल्लक्षणत्वापत्तिरेव । स्यान्मतम् । समर्थोऽपि स्वभावतो भावः सहकारिसमवधानवशेन कदाचित् करोति तदभावाच्च तदानेति*। तदपि विमर्दं न क्षमते । स हि सहकारी किञ्चिदारभते वा न वा । आरभ्यमाणोऽप्यर्थक्रियासाधनत्वाभिमतभावस्वभावभूत उतास्वभावभूतो वेति विकल्पनीयम् । अनारम्भपक्षेऽपेक्षार्थोऽभिधातव्यः । न खल्वनुपकारकं प्रत्यपेक्षार्थवती । स्वभावभूतारम्भे च भावस्याप्युत्पत्तिरापतति । न ह्युत्पद्यमानोऽनुत्पद्यमानस्वभावो भवति । विरुद्धधर्माध्यासस्य भेदापादकत्वात् । भावोदयाङ्गीकारपक्षे लाक्षणिकत्वपरिक्षयः । अतः स्वभावभूतारम्भाभ्युपगमे भावस्य प्राग्वा साधकत्वम् । नाक्षणिकात् क्रमेणार्थक्रियासिद्धिः । तत एवाह्याग*रर्थक्रियोदयः । तदूभावे भावात् तदभावे चाभावात् । न

---

* एतच्चिह्नाङ्कितस्थलेषु संदिग्धम्, आदर्शे त्रुटितं चास्ति ।

च तद्व्यतिरेकाव्यतिरेकाभ्यामन्यः प्रकारोऽस्ति । परस्परविरुद्धयोरेकत्र समवायप्रतीतिविरहात् । ननु क्षणिकोऽपि भावः किमर्थक्रियाजननस्वभावः ? किं वा नेति प्राचीं विकल्पानां * नास्तीति वर्तते । तत्र समर्थस्वभावस्य सहकारिव्यपेक्षा न स्यात् । न ह्यसमर्थादर्थादर्थक्रियोदीयते ॥ श्रूयतां परमरहस्यं सौगतानाम् ॥ अन्त्यक्षणप्राप्तः समर्थ एव भावः कार्यमप्येकैकमेवारभते । किमिति तर्हि सहकारिभिर्विनापि न करोति । निरपेक्षस्य जनकत्वे सहकारिताऽपि तस्य कीदृशीति वक्तव्यम् । अत्र वदामः । यत्तावदिदमुक्तम्।विनाऽपि सहकारिभिः किमिति न करोति । तत् तावत् सुगतमतं कौशलविरहविजृम्भितम् । क्षणिको हि भावो न सहकारिभिर्विनाऽस्ति । कथमेतत् करिष्यति । यस्त्वस्ति नासौ स इति ॥ इति न किञ्चित् क्षीणम् ॥ सहकारिभिर्विना किमिति न भवत्येवेति पर्यनुयोगे हेतुस्वभावैरुत्तरं वाच्यम् । तेन तथा भवन्ति, भावयन्ति चेति । एककार्यकारिता चान्त्यक्षणवर्त्तिनां सहकारिता । ननु तेऽप्यन्यनिरपेक्षा एव जनकाः किमिति न कार्यान्तरमारभन्ते । अत्रापि वयमनीशाः, भावास्तु यदारभन्ते तदारभन्तामित्यनुमन्तुमेव वयं प्रभवामः । तेनामी जनका अपि तदेव जनयन्तीति पश्यतामस्माकं तावत्येवाभ्युपगमाः । नन्वेकेन कृतेऽपरः किं करोतीति । भवेदेतदेवं पर्यायेण क्रियायाम् । सहक्रियायां तु कृत इत्येव नास्ति । नन्वेवमेकस्मादपि तत्सिद्धेः किमपरे कुर्वन्ति । नैतदेवम् । न ते प्रेक्षापूर्वकारिणो येनैवं पर्यालोचयेयुः । अन्योऽपि * मिद *मस्माभिर्विना समर्था वयम् । इह तु न भवाम इति । ते तु हेत्वधीनसन्निधाना न न भवितुं न क्षमन्त इति कानुपपत्तिः । ननु कथमेकं कार्यमनेकस्मादुत्पद्यते । कारणभेद एव हि कार्यस्य भेदे हेतुः । अन्यथाकस्मिकत्वापत्तेः । उच्यते । न सहकारिकारणभेदाद् भेदः कार्यस्य । किन्तु सामग्रीभेदादिति हेतुबिन्दौ कृतपरिश्रमाणामनायाससमधिगम्यम् । तस्मान्न क्षणिकत्वेऽप्यक्षणिकत्वदक्षसदृक्षपर्यनुयोगावकाशः । बीजादीनां हि क्षणपरम्परापरिणामे न तादृशाः क्षणाः सञ्जायन्ते । यतोऽनपेक्षितहेत्वन्तरप्रवृत्तेरनन्तरमङ्कुरं प्रादुर्भवति । नन्वेवमपि परापरेषु बीजादिक्षणेषु तदेवेदमिति प्रत्यभिज्ञा नोपपद्यते । अपि च सप्रत्यभिज्ञप्रत्यक्षविरोधे कथमनुमानमात्मानं लभत इत्यपि वाच्यम् । लाभे वा वह्नावपि शैत्यानुमानप्रसङ्गः ॥ समाधिरभिधी-

यते ॥ ये ते क्षणास्तेषामात्यन्तिकभेदसदृशतया दृष्टमपि प्रत्याकलयितुमनीशस्य भेदाग्रहणनिबन्धनोऽभेदग्रहणव्यवहारः प्रवर्तते। शुक्तिकायामिव रजतव्यवहारः। न चानुमानोदयविरोधः।अर्थक्रियाऽन्यथानुपपत्तेः । प्रत्यभिज्ञा तु भेदाग्रहणेनाप्युपपद्यते इति निरवद्यम् । अत एव च वृद्धा वदन्ति— भवति वै प्रत्यक्षादप्यनुमानं बलीय इति । युक्तं चेदमेव पश्यामः । यत्तदेवेदमिति विज्ञानद्वयमिति एकविज्ञानोदये ख्यातम् । अपि च कृतकानां भावानामवश्यम्भावि विना कारणान्तराभावादिन्द्रियं सन्निहिते व्याप्रियते । न पुनः पूर्वसम्बन्धिता रूपतामुपस्पृशति । पूर्वानुभवभाविता च भावना नेदन्तामपरकालयोगात्मिकामिति । तदिदं ज्वालाप्रत्यभिज्ञानेन व्याख्यातम् । अपि च कृतानां भावानामवश्यम्भाविविनाशः प्रतीयते । अतोऽपि शक्या क्षणभङ्गिताऽनुमातुम् । तथाहि । यद्येषा ध्रुवभाविनी, तत्र तेषां हेत्वन्तरापेक्षा नास्ति । ध्रुवभावी च कृतकानां विनाशः, इति विरुद्धव्याप्तोपलब्धिलिङ्गमनुमानं विनाशस्य हेत्वन्तरापेक्षितां प्रतिक्षिपति । ध्रुवभाविता हि निषिध्यमानहेत्वन्तरापेक्षित्वविरुद्धनिरपेक्षत्वव्याप्तोपलब्ध्या हेत्वन्तरानपेक्षितामुपस्थापयति । सा च स्वविरुद्धं हेत्वन्तरापेक्षित्वं निराकरोति । ये हि हेत्वन्तरापेक्षास्ते ध्रुवभाविनो न भवन्ति । यथा वाससि रागादयः । अतो हेत्वन्तरापेक्षत्वविरुद्धतन्निरपेक्षत्वव्याप्तध्रुवभावित्वस्य योपलब्धिः, सैवाध्रुवभावित्वस्यानुपलब्धिः । विनाशस्य हेत्वन्तरापेक्षा नास्ति । तथा यदि भावा अपि स्वहेतुभ्यो हेत्वन्तरं विनाशं प्रत्यपेक्षेरन् । ततस्तस्य हेत्वन्तरस्य सन्निधाननियमे प्रमाणभावात् कश्चित् कुतोऽपि न विनश्येत् । स्वहेतोस्तु विनश्वरस्योत्पन्नस्योदयानन्तरमप * इति क्षणभङ्गुरत्वसिद्धिः ॥ अपि चेदं चिन्तनीयम् ॥ किं कृतका भावाः स्वहेतुभ्यः समुपजायमाना विनश्वरा एव जायन्ते अविनश्वरा वा । विनश्वरा उदयानन्तरमेव लीयन्त इति क्षणभङ्गिनः । अविनश्वरस्वभावास्तु न कदाचिद्विनश्येयुः । न च हेत्वन्तरात्तेषां विनाशादयः। विकल्पासहत्वात्।स हि जायमाने विनाशो भावादव्यतिरेकी व्यतिरेकी वा । न तावदव्यतिरेकी । हेतुभेदात् । व्यतिरेकिणि तु जाते भावस्य प्राग्वदुपलब्ध्यादिप्रसङ्गः । तेन तिरोधीयत इति कल्पनायामपि तिरोधानं प्रत्येष विकल्प इत्यलमतिप्रसङ्गेन ॥

अत्र केचिदेवं समादधति ॥ तत्तेदन्ते परस्परसंवलिते समाकलयदेकं प्रत्यभिज्ञासमाख्यातं प्रत्यक्षविज्ञानं क्षणभङ्गानुमानं निरुणद्धीति ॥ न चेदमिह समीचीनम् । द्वे एते विज्ञाने ग्रहणस्मरणरूपे यथायथं तत्तामात्र इदन्तामात्रे च व्याप्रियमाणे नालमुभयानुभवसम्भवसमयवर्तितामर्थस्यावभासयितुमिति। प्रतीतिविरोधात् । यथैव खल्वभिन्नदेशकालं वस्त्वेकतया चकास्ति । तथात्रापि भिन्नदेशकालमप्येकतयैव परिस्फुरतीति । तथाविधसंवेदनोदयश्च नैकविज्ञानमन्तरेणेत्येकमेवेदं विज्ञानमुररीकरणीयम् । कार्यसद्भावोपपादनायाप्रतीतमपि कारणं परिकल्पनीयम् । न पुनः कारणमुखनिरीक्षणेन स्पष्टदृष्टकार्यविपर्ययः पर्यालोचनीयः । तेन यद्यपि केवलादिन्द्रियात् केवला*पूर्वानुभवसमासादितजन्मनो भावनाभिधानात् संस्कारात् । नेदमेवंविधं विज्ञानमुदेतुमर्हति। तथापि तयोरन्योन्यसमवधानसमासादितदशान्तरयोरिदं कार्यमित्याचार्याः* न चेदमप्युचितम् । प्रत्यक्षमेवेदं न भवतीति सत्यपि संस्कारोपयोग इन्द्रियव्यापाराधीनजन्मतयाऽस्य प्रथमसमागमसमयभाविनः सकलवादिनामपहस्तितविवादानां प्रत्यक्षसम्मतादविशेषात् । न चेदं प्रमाणाभासमिति किञ्चन प्रमाणमस्ति । बाधककारणदोषसंवेदनान्तरविरहान्नेदमेवानुमानं बाधकमिति मित्तचित्तमनुरज्यते । परस्पराश्रयदोषसमासक्तेः । यावत् खल्वेतद् विज्ञानमबाधितम्, तावदनुमानमेव नोदेतु प्रभवति सञ्जातवति चानुमाने बाधितमिदं भवति इति विशदतरामतरेतरकारणत्वम् । अबाधितविषयता चापि कारणमनुमानोदये । अन्यथा हुतवहे शीतता किमिति नानुमीयते । नन्वेवं तर्हि कथं ज्वालादीनामेकत्वादवधारितानामनुमानतो भेदसिद्धिः । अत्र सिद्धान्तसारमुदीयन्ति । सामान्यविशेषात्मकानि सर्ववस्तूनि । तत्र ज्वालादिषु प्रत्यक्षं सामान्यविषयमनुमानं तु विशेषविषयमिति भिन्नगोचरप्रचारिणोः प्रत्यक्षानुमानयोर्विरोधाभावाद् न प्रत्यक्षेणानुमानोदयविरोधः । कथं पुनरक्षणिकस्यार्थक्रियाकारिता क्रमेणेति वद । स खलु सहकारिसमवधानोपहितविशेषो भावस्तां तामर्थक्रियां क्रमेणैव सम्पादयति । ननु विकल्पितं सहकारिभिः किं व्यतिरिक्तोऽव्यतिरिक्तो विशेष आधीयत इति दूषणानि चेह विकल्पयुगले पूर्वमावेदितानि । अत्रापि त एव प्रतिनियामनुकम*यद्भिनायमेकान्तोऽस्माकं भिन्नान्येव सर्ववस्तू-

नि, न भिन्नानि चेति। किन्तु सर्वभावेष्वभेदाभेदौ सङ्गिरामहे। तत्र भेदमात्रविकल्पसम्भाविनि दूषणान्यभेदाश्रयणेन परिहृतानि। अभेदमात्राश्रितानि च भेदावलम्बनेनेति। नन्वेतेन भेदाभेदौ कथमेकत्र विरोधिनौ निविशेते। तत्राहुः— नेमौ विरोधिनौ सहदर्शनात्। सहानवस्थानलक्षणो हि विरोधः। अनवस्थानञ्च दर्शननिबन्धनं नास्ति विरोधः। तदिदमविचारितरमणीयमिति गुरूणां नानुमतम्। स हि न ददर्श भेदाभेदावेव तावदेकत्र न सम्भवतः। विरोधात्। न हि तयोः सहदर्शनमुपपद्यते। एकाकारप्रतीतिरेव खल्वभेददर्शनम्। विलक्षणाकारप्रतीतिश्च भेददर्शनम्। तत्र यद्येक आकारः प्रतीतः, तदा विलक्षणाकारप्रतीतिर्नास्ति। विलक्षणाकारे च प्रतीते नैकाकारप्रतीतिरेव नास्ति। तेन भिन्नाभिन्नविशेषाश्रयणेनार्थक्रियासमर्थनमघटमानम्। न च प्रत्यभिज्ञानानुमाविरोधः। प्रत्यभिज्ञाया एव परीक्षणीयत्वात्। दृष्टा शुक्तिकायां तदेवेदं रजतमिति मतिः। सा च सादृश्यवशेनैव भेदाग्रहणानिबन्धनैवेति युक्तात्रापि परीक्षा। तत्र परीक्ष्यमाणस्यार्थक्रियानुपपत्त्या क्षणिकत्वे निर्णीते सदृशापरस्परापत्तिविप्रलम्भोऽयमिति निश्चीयते। भवति च विमृशतो*हुतवहादिष्वनुमानवशेन जाताया अपि प्रतीतेर्विपर्ययः। हुतवहादिषु चौष्ण्यप्रतीतिरुपजाता परीक्ष्यमाणापि नानान्यथापपद्यत* इति न विपर्ययानुमानोदयः। तस्मादलमनेन नानाटकपक्षपतितेन* दर्शनेनातिनिर्बन्धेन॥

गम्भीरतरगुरुदर्शनसागरपारदृश्वानस्तु सम्प्रति समाधिमभिदधति। स्तम्भादिषु प्रथममनुभूतेषु पुनरन्तरा तिरोधानादिवशेन विच्छिन्नोपलम्भेषु पुनरनुभवतः स एवायमिति तावज्जायते मतिः। तत्र यद्यर्थक्रिया स्थिरादपि कथञ्चिदुपपद्यते ततो भेदाग्रहणनिबन्धनोऽयमभेदभ्रम इति किमतिकल्प्यते। उपपद्यते च स्थिरादपि सहकारिवशोपजातागन्तुकक्रियादिरूपविशेषभाजः क्रमेणार्थक्रिया। स च विशेषो व्यतिरिक्त एव भावादर्थक्रियाकारिणम्। न च स एवार्थक्रियाकारी, भावस्तूदास्त इति चतुरस्रम्। तथा विधिविशेषालीढतैव तस्य साधनता, यदन्तरमर्थक्रियोदयः, तद्विशेषयोगितयैव भावेषु साधनत्वव्यवहारो लौकिकानाम्। कथं पुनरसौ विशेषस्तस्येति व्यपदिश्यते तदाश्रयतयैवानुमानात्। कथं पुनस्तदाश्रयतैव स्वहेतुवशेनेति मत्वा निवर्त्ततां भवान्। अलमस्माभिर्दूर-

मनुयातैः । अथ कस्माद् भावस्यैव भेदो नानुमीयते प्रत्यभिज्ञाना-नुगुण्यादिति वदामः । दृष्टानुसारि चानुमानमुचितम् । दृष्टोपपत्ति-मुखत्वात् । यथा चार्थक्रियाकारिता, तथेदमपि दृश्यते स्थावरो भाव इति तदनुगुणमनुमानमुचितम् । तेन स्थावरेऽप्यर्थक्रियाव्या-पकक्रमयौगपद्यानिवृत्तेरसिद्धो व्यापकानुपलम्भा*तद्दसिद्धेन विप-र्यये बाधकाभावादसिद्धतन्मात्रानुबन्धिनी क्षणिकतां न सत्ता साधयितुमलम्। अनैकान्तिकत्वादिति। न चार्थक्रियाकारितैव सत्ता किन्तु प्रमाणसम्बन्धयोग्यता । स्वरूपसत्ता च प्रमाणसम्बन्धयो-ग्यता । अतोऽर्थक्रियामकुर्वन्नपि सन्निति न किञ्चिदवद्यम् । यत्कि-दमुदितम् । अनपेक्षाभावा विनाशप्रतीतिः । तदपि विमृश्यमानं जातुषमिवाभरणं विशीर्यते । कं खलु भवन्तो विनाशमभिमन्यन्ते । प्रध्वंसाभावो विनाश इति चेत्– कः पुनः प्रध्वंसाभावः । दधिन क्षीरं नास्तीत्येवमादिका भावविषया संविदिति यद्युच्येत, तदाअमृत-कलायामुदिता नीतिरुद्धरणीया। न हि नास्तीति बुद्धिरस्ति। किन्तु दधिस्वरूपमात्रानुभव एव स्वयम्प्रकाशे शब्दप्रयोगमात्रमे*तस्यैव* पयसो नास्ति । तादृशश्चे*तस्मिन् दधिस्वरूपमात्रोपलब्धिः । न च तां प्रति पयस एव निरपेक्षस्य हेतुता। अनुपनिपातिते हेत्वन्तरे पयस एवोपलब्धेः । न चेदं पयोऽन्तरमुपलभ्यत इति शक्यं वक्तुम् । प्रत्यभिज्ञानस्याभेदसाधकत्वात् । ननु च हेत्वन्तरापेक्षित्वे ध्रुवभा-विता नोपपद्यते । ध्रुवभावितैव कुतोऽवगम्यते । दर्शनादिति चेत् । हेत्वन्तरेणैवावश्यं भवितव्यमिति।न च बालावयं *येनैवंविधवादाद् भीषयामहे । यत् पुनरिदं स्वहेतुभ्यो भावानामपि नश्वराणामुत्पत्तौ हेत्वन्तरायत्ते विनाशे व्यतिरेकिणि जातेऽपि पूर्ववद् भावस्योपल-ब्ध्यादिप्रसङ्ग इति । अत्रोच्यते । उक्तमस्माभिः । यथा तन्मात्रोप-लब्धिरेव विनाश इति । तेन तस्या हेतुसद्भावात् तथैव भवित-व्यम् । अनुपलब्धिरपि तस्य सैवेत्युपलब्धिरेव तस्य नोपलब्धिस्त-न्निबन्धनत्वाभावव्यवहार इति सर्वमनाकुलम् ॥

सुगताशीविषविषमक्षणभङ्गविषानलावलीढायाः ॥
मीमांसाया विहिता तत्त्वमयी जीवरक्षेयम् ॥ १ ॥

श्रीः

श्रीशालिकनाथविरचिता

# वाक्यार्थमातृकावृत्तिः ।

गम्भीरविततमर्थं वाचा सङ्क्षिप्तया निबद्धमपि ॥
न विदन्ति ये समग्रं कृपया तदनुग्रहः क्रियते ॥ १० ॥

तत्र कार्यार्थवादिन एव भावं भावनामपूर्वं च वाक्यार्थान् प्रतिजानीते । तत्रापूर्वमेव वाक्यार्थ इति साधनीयम् । तस्य मूलं पदानामपि तथाविधायितेति तामेव तावदादौ परिशोधयति । अत्र ये प्रत्यस्तमितपदविभागं वाक्यमेव वाक्यार्थस्य वाचकमित्याचक्षते, ये च वाक्यान्त्यवर्ण एवेति, ये च पदैरभिहिताः पदार्थानभिहिताः परस्परान्वयमात्मनोऽवगमयन्ति इति तन्निरासाय प्रतिजानीते—

पदेभ्य एव वाक्यार्थप्रत्ययो जायते यथा ।
तथा वयं निबध्नीमः प्रभाकरगुरोर्मतम् ॥

पदेभ्य एव, न वाक्याद्, नाप्यन्त्यवर्णाद्, नापि पदार्थेभ्य इत्यर्थः।

तं प्रकारं वक्तुमुपक्रमते—

पदैरेवान्वितस्वार्थमात्रोपक्षीणशक्तिभिः ।
स्वार्थाश्चेद् बोधिता बुद्धौ वाक्यार्थोऽपि तथा सति ॥

वाक्यार्थप्रतिपत्तौ हि पदानाम् अनुपायत्वे तदन्यथानुपपत्त्या वाक्यमेकं तदुपायभूतं कल्प्यते । यद्यपि व्युत्पत्त्यनपेक्षाच्छब्दादर्थो नावगम्यते । यद्यपि चानन्त्याद् वाक्यानां तदर्थानां च वैदिकस्य चार्थस्य नित्योपायत्वाद् व्युत्पत्तिरशक्या । तथापि काल्पनिकपदपदार्थव्युत्पत्तिसंस्कृताद् वाक्याद् वाक्यमवगच्छतीत्याश्रीयते । यदि वा काल्पनिकत्वे पदपदार्थानां प्रमाणभावादेकैकवर्णोच्चारणेऽर्थानवबोधात् क्रमोच्चारितानां च युगपच्छ्रवणासम्भवात् पूर्ववर्णजनितसंस्कारसाहितोऽन्त्यो वर्णः प्रत्यायकः । तस्य च पारमार्थिकपदपदार्थव्युत्पत्तिः सहकारिणीति पक्षः स्वीक्रियते । यदि वा पदैः

सुकरव्युत्पत्तयोऽनन्विता एव स्वार्था अभिहिता वाक्यार्थमवबोधयन्तीत्यङ्गीक्रियते । यदि तु पदान्येव अन्वितान् स्वार्थानभिदधतीति शक्यते साधयितुं, तदा वाक्यार्थस्यावबुद्धत्वान्नैताः कल्पना आत्मानं लभन्ते ॥

कथं पुनः पदानामन्वितस्वार्थमात्रबोधकत्वे वाक्यार्थावगतिः सिद्ध्यतीत्यत्राह—

प्रधानगुणभावेन लब्धान्योन्यसमन्वयान् ।
पदार्थानेव वाक्यार्थं सङ्गिरन्ते विपश्चितः ॥

ननु तेषां भूयस्त्वाद् भूयांसो वाक्यार्था वाक्यानि च स्युरित्यत्राह—

भूयांसो यद्यपि स्वार्थाः पदानां ते पृथक्पृथक् ।
प्रयोजनतया त्वेकवाक्यार्थं सम्प्रचक्षते ॥
तत्प्रतीत्येककार्यत्वाद्वाक्यमप्येकमुच्यते ॥

कथं पुनरेकस्य प्रयोजनत्वमित्यत्राह—

प्रतिपत्तिर्गुणानां हि प्रधानैकप्रयोजना ॥

यद्धि प्रधानभूतं तदेव कथं नाम विशिष्टं प्रतीयते इत्येवमर्थं गुणानां प्रतिपादनम् । तेन तत्रैव तात्पर्यम् । तदेव प्रमेयम् । तात्पर्यविषय एव शब्दस्य प्रामाण्याभ्युपगमात् तस्य तथाभूतस्य प्रतिपत्तेरेकपदानिबन्धनेति वाक्यमेव तत्र प्रमाणम् । अत एव च षष्ठाद्ये, न पदं नाम किञ्चन वाक्ये न पदार्थनामकं च न वाक्यार्थ इत्युक्तम् । पृथग्भूतं पदं नाम किञ्चन प्रमाणमस्ति । पृथग्भूताश्च पदार्था न प्रमेयाः सन्तीत्यर्थः । एतच्च तत्रैव स्पष्टमुक्तम् ॥

सम्प्रति वाक्यमेव वाचकं वाक्यार्थस्येति ये ब्रुवते, ये च वाक्यान्त्यवर्ण एवेति, तन्निराकरणायाह—

व्यवहारेषु वृद्धानां वाक्यश्रवणभाविषु ।
आवापोद्धारभेदेन पदानां शक्तिनिश्चयः ॥

यद्यपि वृद्धव्यवहारपूर्विकैव सर्वा व्युत्पत्तिः । वाक्यैरेव च व्यवहारः । तथापि यत्पदावापे यस्यार्थभागस्यावापः, यदुद्धारे चोद्धारः, तस्मिन्नेवार्थे तस्यैव वाचकशक्तिरवसीयते । न च तथा वाक्यार्थप्रतिपत्तिर्नोपपद्यते । वक्ष्यमाणत्वान्न्यायस्य । येन कार्यबलेन वाक्यमेकं प्रत्यक्षपरिदृश्यमानवर्णभेदापह्नवे न कल्प्येत । कि-

श्व, शिशो गामानय, शिशो गां बधान । अर्भक गामानय, अर्भक ! गां बधान, डिम्भ गामानय, डिम्भ गां बधानेत्यष्टानां वाक्याना-मष्टौ वाचकशक्तयः कल्प्याः । पदवादिनस्तु सप्तानां वाक्यानां सप्तशक्तय इति । अनयैव दिशा शुक्लामितिपदप्रक्षेपे वाक्यवादिनो-ऽष्टावपराः कल्प्याः । पदवादिनस्त्वेकैव । अपारमार्थिके च पद-विभागे किमाश्रिता व्युत्पत्तिरभ्युपायमुपैतीति चिन्तनीयम् । ये पुनर्वाक्यान्त्यवर्णस्य वाचकतामाहुः, तन्मतेऽपि यावत्पदपदार्थ-विभागस्य पारमार्थिकत्वाद् घटेतैव व्युत्पत्तिः । ननु वाच्यवाचक-सम्बन्धग्रहणमेव व्युत्पत्तिरित्युच्यते । न च वाक्यान्त्यवर्णवाचक-त्ववादिनां पदं पदार्थस्य वाचकम् । अतस्तन्मतेऽपि निर्विषयैव व्युत्पत्तिः । उच्यते । न निर्विषया । निमित्तनैमित्तिकभावस्याभ्युपग-तत्वात् केयमबाधकस्य निमित्तता । नैष दोषः । वाक्याद्धि यत्पद-प्रयोगेऽन्विते सति यत्पदार्थान्वितो वाक्यार्थः प्रतीयते, तत् पदं त-स्यार्थस्यावाचकमपि भवति निमित्तम् । किन्तु तन्मतेऽपि शक्ति-कल्पनागौरवं पूर्वोक्तन्यायेन तुल्यमेव । येऽप्याहुः— वाक्यमेव स्मृत्यारूढं वाक्यार्थं प्रतिपादयतीति । तेषामपि प्राच्यकल्पनागौरव-दूषणमशक्यपरिहारम् । भाष्यकारवचनं च पूर्ववर्णजनितसंस्कार-सहितोऽन्त्यो वर्णः प्रत्यायक इति निर्विषयम् । अशक्यं च महावाक्य-स्य सकृत् स्मरणम् । तस्मात् पदानामेव वाचकशक्तिराश्रयणीया ॥

अत्र केचिच्चोदयन्ति— ननु वृद्धव्यवहारप्रयुक्ते वाक्ये पदानां वाचकशक्त्यवधारणमेव नोपपद्यते । पुरुषवाक्यानामर्थं प्रति लिङ्गा-भावेन प्रमाणत्वाभ्युपगमात् । वाक्याद्धि कार्यभूतात् प्रत्ययित-स्य वक्तुस्तदर्थविषयं पूर्वविज्ञानं कारणभूतमनुमीयते । तस्य च ज्ञानस्य ज्ञेयाव्यभिचारित्वाज्ज्ञेयभूतार्थनिश्चय इति न वाचकशक्त्य-ऽवगमः । उच्यते । न नूनं भवान् नीतिपथोक्तमर्थं सम्यगाकल-यति । परिहृतं हि तत्रेदम् । बालो हि व्युत्पद्यमानः प्रयोज्यवृद्धस्य शब्दश्रवणसमनन्तरभाविनीं विशिष्टचेष्टानुमितामर्थप्रतीतिं शब्द-कारणिकामवगच्छति । स तथा व्युत्पन्नः कदाचित् कस्यचिदन्वि-तार्थपदरचनं वाक्यमुपलभते । तथोपलभमानस्य चैष विमर्शो जायते । सम्भाव्यमानानन्वितार्थपदरचनमिदं वाक्यं कथं वृद्धस्या-ऽर्थनिश्चयं कृतवत् । वृद्धस्यापि पुरुषायत्ते वाक्येऽनन्वितार्थपदरचन-

शङ्कामेव सम्भवतीति तस्यैवं विचिकित्सोदये पुनरेष निश्चयो जायते। नूनमनेनायं प्रयोक्तेत्थमवधारितोऽन्वितार्थान्येव पदान्ययं प्रयुङ्क्त इति तथाविधपदप्रयोगनियमश्चास्यानुपलब्धेऽन्वय उपपद्यत इत्येवमन्वयोपलम्भमनुमिमानेनान्वयो निश्चीयते चान्वये वाक्य- मेतदनुवादकभूतमर्थस्येति। एवं चेदनुवादकतया तस्यार्थस्य त- द्वाक्यं बाधकमेवेति पूर्ववाचकशक्तिज्ञानं, नायथार्थमिति मन्यते। यदि परमया प्रागनुमानपुरःसरोऽर्थनिश्चयोऽस्येति नावगतम्। याऽपि चेयमस्यानिश्चिते चान्वये विशिष्टवक्तृज्ञानानुमा, साऽपि पदानां स्वरूपमात्रावगमादेव नोपपद्यते। किन्तु विशेषावगमात्। न च शक्तेरन्यः पदानां विशेषोऽवगम्यते। ततो मयैवानेनाप्यमीषां पदानां वाचकशक्तिरवधारिता। तेन विशिष्टान्वयवाचकपदप्रयोगात् तद्वि- षयं वक्तुः पूर्वज्ञानमनुमितवानिति गम्भीरोऽयं नीतिमहाह्रदः॥

अत्र केचिदाचक्षते— भवतु पदानां पदार्थेषु शक्तिज्ञानं, तथा- प्यन्विताभिधानं न सिद्ध्यतीति। तथाहि। प्रतियोगिनामनन्ततया- ऽन्वयानन्त्यात् तदानन्त्ये चान्वितानामप्यानन्त्यात् सम्बन्धग्रहणं दुष्करम्। अगृहीतसम्बन्धस्य च पदस्य वाचकत्वम्। एकस्माच्छ- ब्दात् सर्वार्थप्रतीतिप्रसङ्गात्। सामान्यान्वयाभिधानं च नाशङ्कनी- यमेव। वाक्येभ्यो विशेषान्वयावगमात्। स्वरूपमात्राभिधानेनापि च वाक्यार्थप्रतिपत्तावन्विताभिधानाश्रयणे शक्तिकल्पनागौरवात्। तथा पदेनान्वितस्वार्थोऽभिधीयमानः, किमभिहितेन पदार्थान्तरेण अन्वितोऽभिधीयते? उतानभिहितेनेति विकल्पनीयम्। अनभिहि- तेन चेत् पदार्थान्तरप्रयोगवैयर्थ्यम्। एकस्मात् पदार्थाच्च सर्वार्थ- प्रतीतिप्रसङ्गः। अभिहितेन चेत् तदपि तर्हि पदमन्विताभिधायितया पदार्थान्तरोत्थमर्थाभिधानमपेक्षत इतीतरेतराश्रयं प्राप्नोति। तस्मात् पदान्तराभिधानानपेक्षस्वरूपमात्राभिधानमेवार्थानां पदैः क्रियते। ते च तथाभूताः पदैरर्था अभिहिता आकाङ्क्षासन्निधियोग्यतावन्तो वाक्यार्थमवगमयन्ति। न तेषां सम्बन्धग्रहणापेक्षा शङ्कनीया। यतः पदधर्मोऽयं, नायमर्थधर्मः।तदाह भाष्यकारः— पदानि हि स्वं स्वमर्थ- मभिधाय निवृत्तव्यापाराणि॥

अथेदानीमभिहिताः सन्तो वाक्यार्थमवगमयन्तीति, तदेतन्नि- राकर्तुमुपाक्रमते—

ओप्यन्ते चोद्ध्रियन्ते च स्वार्था अन्वयशालिनः ।
अन्वितेष्वेव सामर्थ्यं पदानां तेन गम्यते ॥

अत्राह— सत्यमन्वितपदार्थविषयावेवावापोद्धारौ, तथाप्यन्विताभिधानमशक्यम् । पारम्पर्येणापि तदुत्पत्तेः । तथाहि— पदैरनन्वितोऽभिहितोऽर्थोऽन्वितप्रतिपत्तेर्निमित्तं भवतीति पदानां पारम्पर्येणान्वितेष्वपि हेतुत्वम् । तदाहुर्वार्तिककारपादाः—

न विमुञ्चन्ति सामर्थ्यं वाक्यार्थेऽपि पदानि नः ।
तन्मात्रावस्थितेष्वेषु पदार्थेभ्यः स गम्यते, इति ॥

पदार्थप्रतिपादनं च वाक्यार्थप्रतिपत्तये प्रयुक्तानां पदानामवान्तरव्यापार इति च तेषामेव व्यवहारः—

वाक्यार्थमितये तेषां प्रयुक्तौ नान्तरीयकम् ।
पाके ज्वालेव काष्ठानां पदानां प्रतिपादनम्, इति ॥

एतमाशङ्कामुपेक्ष्यैव तावद् दोषान्तरं परिहरति—

आकाङ्क्षासन्निधिप्राप्तयोग्यार्थान्तरसङ्गतान् ।
स्वार्थानाहुः पदानीति व्युत्पत्तिः संश्रिता मया ॥
आनन्त्यव्यभिचाराभ्यां तथा दोषो न कश्चन ॥

यत्तावदुक्तम्, आनन्त्याच्छब्दशक्त्यवधारणानुपपत्तिः। अगृहीतशक्तेश्च वाचकत्वे व्यभिचारप्रसङ्ग इति । तदनुपपन्नम् । उपलक्षणाश्रयणेनाऽपि सम्बन्धबोधसौकर्यादाकाङ्क्षितेन योग्येन सन्निहितेन चान्वितं स्वार्थं पदं वक्तीति व्युत्पत्तिराश्रीयते । तेन,

यद्यदाकाङ्क्षितं योग्यं सन्निधानं प्रपद्यते ।
तदन्वितः पदेनार्थः स्वकीयः प्रतिपाद्यते ॥

उक्तार्थः श्लोकः ॥ का पुनरियमाकाङ्क्षा ? । प्रतिपत्तुर्जिज्ञासा । किन्निबन्धना पुनरसौ । अविनाभावनिबन्धनेति केचित् । क्रिया हि कारकाविनाभाविनीति तां प्रतीत्य कारकं जिज्ञासते । एवं कारकमपि बुद्ध्वा क्रियामिति । तदयुक्तमिति मन्यन्ते । जिज्ञासा तथा तदीयजनकतत्क्रियातत्कारकान्तरादिजिज्ञासाप्यापाद्यते । अथ प्रयोजनाभावात् कारकातिरिक्तमन्यन्न जिज्ञास्यते, तर्हि क्रियामात्रावगमेऽपि यत्र कारकज्ञानेन प्रयोजनं नास्ति तत्र जिज्ञासा न स्यात् । अनुष्ठेयतया हि क्रियायामवगतायां कारकमन्तरेण तदनुष्ठानानुपपत्तेः। कारकज्ञानं प्रयोजनवद् वर्त्तमानोपदेशादौ त्वनुष्ठेयतया नास्ति

कारकज्ञानेन प्रयोजनम् । अथ च तत्रापि वाक्यमपरिपूर्णं मन्यन्ते, साकाङ्क्षार्थाभिधायितया चापरिपूर्णता। अत एव च तत्राध्याहारमपि कुर्वन्ति । यत्रापि चानुष्ठेयक्रियावगमः, तत्रापि च निःशेषकारकजिज्ञासा स्यात् । तथा, देवदत्त! गामानयेति करणानुवादाज्ञादपरिपूर्णता स्यात् । अथैककारकज्ञानेनाऽपि तावदनुष्ठानोपपत्तेर्न कारकान्तरजिज्ञासा, तर्हि देवदत्त! गामानय दण्डेनेति प्रयुक्तेऽपि दण्डशब्दे तदाकाङ्क्षा न स्यात् । ततश्चानाकाङ्क्षितत्वात् तस्य तदन्वयो न स्याद् वाक्यार्थे । अथ दण्डपदोच्चारणात् तत्राकाङ्क्षा परिकल्प्यते । अपदार्थस्यानन्वये तत्पदोच्चारणमनर्थकं स्यादिति ॥

एवमप्यरुणयैकहायन्या पिङ्गाक्ष्या सोमं क्रीणातीत्यनन्वयप्रसङ्गः । न हि वेदपदोच्चारणेनानर्थकेन भवितव्यमिति किञ्चन प्रमाणमस्ति। अतो न तत्राकाङ्क्षोदये किञ्चित् कारणमस्तीति सोमं क्रीणातीत्यतोऽधिकस्यानन्वितता स्यात् । अपि च लौकिकत्वात् क्रियाकारकयोर्यत्किञ्चित्क्रियाकारकोपादानेऽपि तत्सिद्धेरपि विघातान्नातीव विशेषजिज्ञासा घटते । अज्ञाते हि ज्ञानेच्छा घटते, न पुनर्ज्ञातेऽपि ॥

अत्रोच्यते, अभिधानापर्यवसानमभिधेयापर्यवसानं च जिज्ञासोदयनिबन्धनम् । एकपदप्रयोगे हि द्वारमित्यभिधानमेव, न पर्यवस्यति । न ह्यनुच्चरिते प्रतियोगिसन्निधायिनि पदेऽन्विताभिधानं शक्यते । वृद्धव्यवहारवशेनान्वितार्थप्रतिपादनपरता पदानामवधारितेति तदर्थं प्रयुक्तैव प्रतियोगिजिज्ञासा। यस्याप्यभिहितान्वय इति राद्धान्तः, तन्मतेऽपि पदार्थस्य पदार्थान्तरेणान्वयासामर्थ्यात् तदुपपत्तये युक्तैव प्रतिज्ञा सा । तस्यां च सत्यामपरिपूर्णवाक्यपरिपूरकतया लोके व्यवहारस्य विहितत्वात् प्रकरणादिवशेन योग्यप्रतियोग्यध्याहारः क्रियते । अमावास्यायामपराह्णे पिण्डपितृयज्ञेन चरन्तीत्यादिष्वनेकपदप्रयोगादन्विताभिधानेऽप्यभिहितस्य कार्यस्यापूर्वात्मनोऽनुष्ठानं विना कार्यत्वानुपपत्तेः । कर्त्रा च विना तदसम्भवादधिकारहते च तदयोगान्नियोज्यमन्तरेण च तस्यानवकल्पनात् तदुपपत्तये युक्तैव नियोज्यजिज्ञासा । तस्यां सत्यामपरिपूर्णत्वावगमाल्लौकिकवदध्याहारे कर्त्तव्येऽन्तरङ्गत्वे परिधेरनुष्ठानाक्षेपो मा कल्पिष्यतेति तत्परित्यागेन काम्यनियोज्यविशेषणे स्थिते सर्वकामिपुरुषव्यापिस्वर्गस्यैव नियोज्यविशेषणत्वयोग्यत्वात् स्वर्गकामो नियोज्योऽध्या-

ह्रियते । तथाचाध्ययनविधावन्यप्रयुक्तानुष्ठाननिर्वाहिकार्यभावे नियोज्यो नाध्याह्रियते। अयौगिकत्वाच्चापूर्वे कार्ये नियोज्यत्वस्याध्याहारमन्तरेणाकाङ्क्षा निवर्तते। अलौकिकत्वादेव च, सौर्यं चरुं निर्वपेद् ब्रह्मवर्चसकाम इत्यादौ करणोपकारमन्तरेण विधेः सिद्ध्यसम्भवात् तज्जिज्ञासा, तज्जनकपदार्थजिज्ञासा च । अत एव तदभावे भाष्यकारो वाक्यानां न्यूनतामाशङ्क्य परिहृतवान् ॥

नन्वेवं तर्हि यत्र पदत्रयं प्रयुज्यते— गामानय शुक्लामिति लोके, तत्र हि कारकद्वयस्यासम्भवान्नाकाङ्क्षाऽस्तीति कथमन्विताभिधानम् । गामानयेत्येतावतैव परिपूर्णत्वाद्वाक्यस्य । सत्यम् । पदान्तरानुच्चारण एवम् । उच्चरिते तु तस्मिन् तस्याप्यानयतिसन्निधानादेकवाक्यस्यावगमादानयत्यन्वितस्वार्थाभिधायित्वादाकाङ्क्षां विना च तदसम्भवादानयतेराकाङ्क्षापरिकल्प्यते । तथाचोक्तं भाष्यकारेण—भवति च रक्तं प्रत्याकाङ्क्षेति। तेनात्रान्विताभिधानसिद्ध्यर्थमेवाकाङ्क्षा । यदि परमयं विशेषो, द्वारमित्यादौ तस्यैव पदस्यान्विताभिधानायाकाङ्क्षा, गामानय शुक्लामिति तु पदार्थान्तरस्येति ॥

अन्वितस्याभिधानार्थमुक्तार्थघटनाय वा ।

प्रतियोगिनि जिज्ञासा या साकाङ्क्षेति गीयते, इति सङ्ग्रहश्लोकः॥

सा चेयमाकाङ्क्षा भवन्ती व्युत्पत्तावुपलक्षणमाश्रीयते । किमिति पुनः सन्निधियोग्यत्वे एव नाश्रीयते । साकाङ्क्षेणान्विताभिधानादर्शनात् । अयमेति पुत्रो राज्ञः पुरुषोऽयमपनीयतामिति पुत्रपदसम्बन्धनिराकाङ्क्षो राजा, न पुरुषेणान्वीयते। कस्मात् पुनरनयोः पुत्रपुरुषयोः सन्निधियोग्यत्वाविशेषेऽपि पुत्रेणैव राज्ञः सम्बन्धो, न पुरुषेण । उच्यते । न्यायसापेक्षत्वाद् वाक्यस्यार्थप्रतिपत्तेः । नित्यसापेक्षेण पुत्रेणैव राजा सम्बद्ध्यते। तत्सम्बधिनिराकाङ्क्षश्च न पुरुषसम्बन्धमनुभवतीति । आकाङ्क्षाऽपि व्युत्पत्त्युपलक्षणमाश्रीयते ।

परिपूर्णेन योग्यस्य समीपस्याप्यनन्वयः॥

व्युत्पत्तौ तेन शब्दानामाकाङ्क्षाप्युपलक्षणम्, इति सङ्ग्रहः ॥

सा चेयमाकाङ्क्षा प्रतियोगिषु सर्वेषु न सहसैवोपजायते, किन्तु कारणोपानपातक्रमेण । तथाहि— विषयमन्तरेणापूर्वं कार्यं प्रत्येतुमेव न शक्यत इति प्रतिपत्त्यनुबन्धभूतविषयापेक्षा प्रथमं विधेः । अथ प्रतिपन्ने विषयसम्बन्धिनि विध्यर्थे नियोज्यमन्तरेण तासद्ध्य

सम्भवान्नियोज्याकाङ्क्षा । तथाच विषयीभूते च भावार्थे च करणलब्धे वैकृतापूर्वाणां करणोपकाराकाङ्क्षा । लब्धे च तस्मिंस्तज्जनकपदार्थाकाङ्क्षेति । तथाचाहुः—

प्रतियोगिषु सर्वेषु नाकाङ्क्षोदेति तत्क्षणात् ।
कारणोपरिपातानुपूर्व्येण तु यथायथम् ॥

तत्क्रमेणाऽन्विताभिधानमपि क्रमेणैव । श्लोकश्च भवति—

जिज्ञासा जायते बोद्धुः सम्बन्धिषु यथा यथा ।
तथा तथैव शब्दानामन्वितार्थाभिधायिता ॥

अथ यथा सन्निधिकथनं तथा बुद्धौ विपरिवृत्तिः । सा च न शब्दनिबन्धनैव, केवलाऽन्विताभिधानव्युत्पत्तौ उपलक्षणम् । अध्याहृतेनापि लोकेऽन्विताभिधानदर्शनात् । न च वाच्यं शब्द एवाध्याह्रियते । स चार्थमुपकल्पयतीत्यनुपयोगादप्रमाणकत्वाच्च । यद्यप्यर्थापत्तिप्रमाणकोऽध्याहारः, तथापि शब्दकल्पनमनुपपन्नम् । येन हि विनाऽनुपपत्तिः, तदेवार्थापत्तिप्रमेयम् । नचार्थानां शब्दमन्तरेणानुपपत्तिः स्यान्मतम् । अर्थकल्पनायैवार्थापत्तिः प्रवर्त्तमाना तस्यार्थस्य सविकल्पकज्ञानवेद्यत्वात् । सविकल्पकज्ञानानां च शब्दपुरःसरत्वात् पुरोवर्त्तिनि शब्द एव पर्यवस्यतीति । तदसत् । यथैव शब्दपुरःसरेऽपि सविकल्पकज्ञाने लिङ्गस्येन्द्रियाणां च निर्विकल्पकदशायामर्थ एवावधारितशक्तित्वान्न शब्दमात्रे पर्यवसानम् । तथा दृष्टार्थापत्तौ साक्षादुपपादकेऽर्थ एवार्थापत्तेः प्रामाण्याऽभ्युपगमात् । श्रुतार्थापत्तावपि तत्रैव तस्याः प्रामाण्यं युक्तं, न शब्दे । तस्य साक्षादनुपपत्तिशमनासमर्थत्वात् । किञ्च सर्वत्र सविकल्पकज्ञाने शब्दस्मरणविपरिवर्त्ती न प्रमेयतां प्रतिपत्तुमर्हति। सविकल्पकज्ञानेषु पूर्वप्रतीयमानता च शब्दस्य नातीव प्रमाणवती। किन्त्वर्थप्रतीतावेव समानकालं शब्दस्मरणमिति प्रतीत्यारूढम् । तेन श्रुतार्थापत्तिः शब्दविषया । न च शब्दानुपपत्त्या शब्दकल्पनैवोचिता । तस्य स्वतोऽनुपपत्त्यभावात् । अन्विताभिधानानुपपत्त्या तु कल्पना प्रसरन्ती योग्यप्रतियोग्यर्थविषयैवावतिष्ठते । तस्यैवाकाङ्क्षितत्वात् । दशमाद्यन्यायेन पदार्थवत् पूर्वप्रतीतस्यापि शब्दस्योपेक्षणीयत्वात् । न च द्वारमिति यत्राध्याहारस्तत्राप्याव्रियतां सव्रियतामिति वा कल्पयितुमर्थापत्तेः प्रभविष्णुता । सामान्यकल्पना-

मात्रहेतुत्वात् । तस्मादपरिपूर्णपरिपूरकतया लोकत एवाध्याहारस्याऽप्युपपत्तिः । तत्र योग्यतया प्रकरणादिवशेन च विशेषावधारणादर्थ एव च परिपूरक इत्यनुपयोगी शब्दस्याध्याहारः । अतो विश्वजिदादौ नियोज्येन च सर्वत्र च करणोपकारेण विकृतिषु च प्रकृतपदार्थैरशब्दोपस्थापितैरपि सिद्धमन्विताभिधानम् । आकाङ्क्षावच्च सन्निधावपि सन्निधापकक्रमेणैव क्रमो वेदितव्यः । तदनुसारेण चान्विताभिधानमपि तथैवेति ॥

सन्निधिः शब्दजन्मैव व्युत्पत्तौ नोपलक्षणम् ।
अध्याहृतेनाप्यर्थेन लोके सम्बन्धदर्शनात् ॥
सहसैव न सर्वेषां सन्निधिप्रतियोगिनाम् ।
सन्निधापकसामग्रीक्रमेण क्रमवानसौ ॥
यथा यथा सन्निधानं जायते प्रतियोगिनाम् ।
तथा तथा क्रमेणैव शब्दैरन्वितबोधनम्, इति सङ्ग्रहश्लोकाः ॥

तौ यथोक्तावाकाङ्क्षासन्निधी प्राप्तमाकाङ्क्षितं सन्निहितं योग्यं च यत् पदार्थान्तरं तेन सङ्गतमित्यर्थः । किं पुनरिदं योग्यत्वं नाम । यत् सम्बन्धार्हत्वम् । सम्बन्धार्हमिति कथमवगम्यते । सम्बन्धित्वेन दृष्टत्वात् । नन्वेवं तर्हि कथमपूर्वे कार्येऽन्विताभिधानं वेदे । तेन सह कस्यचित् सम्बन्धादर्शनात् । उच्यते । सामान्यतो योग्यतावधारणं विशेषप्रतिपत्तावुपाय इत्यदोषः । यदपि तदपूर्वं तदपि कार्यमेवेति दृष्टचरकार्यसम्बन्धं यत् तद् योग्यमित्यवसीयते ॥

सामान्येनैव योग्यत्वं लोके यदवधारितम् ।
तदन्विताभिधानस्य व्युत्पत्तावुपलक्षणम् ॥

अन्ये तु यदयोग्यतया नावधारितम् । तद् योग्यम् । तेन प्रमाणान्तराप्रतीतेनापि विध्यर्थेनान्विताभिधानं सिद्ध्यतीत्याहुः । तदिदमसारम् । यथा प्रमाणान्तरावेद्ये वस्तुनि कस्यचिद् योग्यताऽवधारयितुं न शक्यते तथैवायोग्यताऽपीति सर्वस्य सर्वेण प्रकारेण तस्मिन्नन्वयः स्यात् । भावार्थस्यैव विषयत्वेनान्वयोऽनुपादेयविशेषणविशिष्टस्यैव नियोज्यतयान्वय इति नियमो नोपपद्यत इत्यलमतिप्रसङ्गेन ।

नन्वन्विताभिधानपक्षे व्युत्पत्तावुपलक्षणाश्रयणमेव गौरवमित्यत्राह— पदार्थेष्वपि चैवैषा सामग्र्यन्वयबोधिनी ॥

यस्यापि मते पदार्था एवाऽन्योन्यान्वयमवगमयन्ति, तेनाऽपि प्रतिनियतान्वयबोधसिद्ध्यर्थमिदमाश्रयणीयमेव । आकाङ्क्षासन्निधियोग्यतावन्त एव पदार्था अन्वयं बोधयन्ति, नान्ये इति । एतदेव कथमिति पर्यनुयुक्तेन वृद्धव्यवहारे तथा दर्शनादिति परिहारो वाच्यः । तस्मादुभयपक्षसाधारणत्वान्नेदं दूषणम् ॥

नन्वेवमपि केन विशेषेणाभिहितान्वयं परित्यज्यान्विताभिधानमाश्रितमिति । अत्राहुः—

किन्तु तेषामदृष्टैषा शक्तिर्मानान्तरोद्गतौ ।
कल्प्या विशिष्टार्थपरपदसंस्पर्शभाविता ॥

पदार्थानां हि शब्दादन्यतः प्रमाणात् प्रतीयमानानामन्योन्यान्वयबोधकत्वं न प्रतीतमिति शब्दाभिधेयानां तदवगमशक्तिः कल्पयितव्या । तस्याश्चोत्पत्तौ शब्दसंस्पर्श एव हेतुरित्याश्रयणीयम् । शब्दो हि विशिष्टार्थप्रतिपत्तिपरतया लोकव्यवहारेषु प्रयुज्यमानो दृष्टः । न चासौ साक्षाद्वाक्यार्थप्रतिपादने समर्थ इति पदार्थान् अवान्तरव्यापारीकरोतीति च यद्यन्योन्यान्वयबोधने समर्थाः स्युस्तदा तेषामवान्तरव्यापारता स्याद्, नान्यथेति विशिष्टार्थावबोधपरशब्दसंस्पर्शादेव तेषामेषा शक्तिराविर्भवतीति शब्दस्यापि पदार्थशक्त्याधानशक्तिराश्रयणीया । स्यादेवम् । यदि मानान्तरावसेयानां पदार्थानामन्योन्यान्वयावगमे सामर्थ्यं न स्यादिति । अस्ति तु श्वैत्यस्यानवधारिताश्रयविशेषस्य प्रत्यक्षदृष्टस्याश्वस्याप्रतिपन्नगुणविशेषस्य च प्रत्यक्षहेषाशब्दानुमितस्य पदनिक्षेपशब्दाऽनुमितस्य चाज्ञातकर्तृभेदस्य धावनस्य श्वेतोऽश्वो धावतीत्यन्वयबोधकत्वदर्शनात् ॥

तदाहुर्वार्त्तिककारपादाः—

पश्यतः श्वेतमारूपं हेषाशब्दं च शृण्वतः ।
खुरनिष्पेषशब्दं च श्वेतोऽश्वो धावतीति धीः ॥
दृष्टा वाक्यविनिर्मुक्ता, इति ॥

आरूपमव्यक्तरूपमित्यर्थः । तेन गुणिविशेषो न प्रत्यक्षमवसीयत इत्यर्थः ॥

अत्रोच्यते— किं येनैव पुरुषेण श्वैत्यसमानाश्रयौ हेषाध्वनिपदनिक्षेपशब्दावधगतौ, तस्यैवयं श्वेतोऽश्वोधावतीति धीः? उत यस्यापादानानध्यवसायः,तस्यापीति । किमतः । यदि तावदप्रत्याकलित-

ह्रेषाध्वनिपदविहारनिर्घोषाः पादा न स्युरित्युच्यते, तदा प्रतीतिविरोधः । स ह्येवं प्रतिपाद्यते । भवितव्यमस्मिन् देशे नूनमश्वेन भवितव्यं च केनचिद्धावतेति । अथाश्वसम्बन्धिनमेव खुरपुटटङ्कारवमभ्यासवशादवैति, तदासावश्ववर्तिनीमेव वेगवतीं गतिमनुमिनोतीति । न पुनः केवलमेवावगम्य तस्याश्वान्वयः पदार्थसामर्थ्येन अवबुध्यते । योऽपि तस्मिन् देशे नास्त्यन्योऽश्वादिति निश्चित्य पारिशेष्यादपादानाध्यवसायेऽपि ह्रेषाध्वनेः श्वैत्यसमानाधिकरणमश्वत्वमप्यध्यवस्यति । तस्या विग्रहाभाव इव वहिर्भावावगतावर्थापत्तिः । योऽयं श्वेतः स एषोऽश्व इत्यत्र प्रमाणम् । यस्तु श्वैत्यसमानाधिकरणौ ह्रेषाध्वनिखुरपुटटङ्कारावध्यवस्यति, तस्याप्यश्वत्वे वेगवति च गमने श्वेतवर्तिन्येवानुमानं, न स्वतन्त्रयोरिति प्रमाणान्तरेणासम्बद्धावभातानां पदार्थानां क्वचिदन्योन्यसम्बन्धबोधकत्वमनुमानार्थापत्तिव्यतिरेकेण प्रतीतम् । अपि च यदि पदार्थावगतिमात्रादेवान्वयावगमः, तदा कस्मिन् प्रमाणे कस्यान्तर्भाव इति वाच्यम् । न तावच्छाब्दे । शब्दाभावात् । पदार्थाभिधानावान्तरव्यापारेण हि यच्छब्दादन्यज्ज्ञानं तच्छाब्दमित्येष वो राद्धान्तः । कस्मान्नास्य शाब्देऽन्तर्भावः । प्रमाणान्तराभ्युपगमे तु शाब्दस्योच्छेदः । शब्दावगतपदार्थविषयेऽपि तस्यैव प्रामाण्यप्रसङ्गात् । तस्माच्छब्दाभिहितानां पदार्थानामन्यत्रादृष्टार्थं वाक्यार्थबोधनसामर्थ्यं कल्पयितव्यम् । तदाधानशक्तिश्च शब्दानामपीति कल्पनालाघवाच्छब्दानामेवान्वितस्वार्थावबोधनशक्तिमात्रं कल्पयितुं न्याय्यम् । तेन पारम्पर्येण पदानामन्वितेषु सामर्थ्यमिति निरस्तम् ॥

नन्वनन्तप्रतियोग्यन्वितस्वार्थबोधनविषया अनन्ता एव शब्दस्य शक्तय इति कल्पयितव्याः स्युः । अभिहितान्वयवादे त्वेकस्मिन् अर्थे एकस्य शब्दस्यैकैव शक्तिरिति । तन्न । एकयैवाकाङ्क्षितसन्निहितयोग्यान्वितस्वार्थाभिधानशक्त्या प्रतियोगिभेदेन कार्यभेदोपपत्तेश्चक्षुरादीनामिव यथैवैकया दर्शनशक्त्या चक्षुर्घटादिप्रतियोगिसहायभेदाज्ज्ञानानि भिन्नानि जनयति, तथा शब्दोऽपि प्रतियोगिभेदादिति मन्तव्यम् । किञ्च पदार्थेष्वपि तुल्यमेतदिति न किञ्चिदेतत् ॥

अन्ये त्वाहुः—आकाङ्क्षासन्निधियोग्यतावन्तः पदार्था वाक्यार्थीभवन्ति, न पुनर्वाक्यार्थमेव बोधयन्तीति । तदिदमतिमन्दम् ।

वाक्यार्थावगतेः कारणाभावप्रसङ्गात्। अनुपायत्वे हि पदानामन्वयप्रतीतौ पदार्था अपिचेन्न कारणमकारणिकैवापद्येत । स्यान्मतम्। क्रियापदेन कारकपदेन वा साकाङ्क्षेऽर्थेऽभिहिते यदेव पदान्तरेण योग्यप्रतियोगिपदार्थान्तरं सन्निधाप्यते, तदेव तस्य सम्बन्धित्वेनावतिष्ठत इति। सत्यमेवम्। अवगतिस्तु तत्सम्बन्धस्य किन्निवन्धनेति वाच्यम्। अथ पूर्वपदार्थे साकाङ्क्षे यत् पदान्तरमुच्चरितम्, तत् सम्बन्धितयैव स्वार्थमुपनयति प्रत्ययवत्। यथा प्रकृत्यर्थे पूर्वप्रतीते प्रत्यय उच्चार्यमाणः स्वार्थं तद्विशिष्टमेवाभिधत्ते। तथा पदान्तरमपि। तदुक्तं, प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूत इति। प्रकृतिः स्वार्थं प्रत्ययाऽर्थविशेषणत्वेनोपनयतीति प्रत्ययेन सह तदर्थमाहेत्यर्थः । स चोक्तसिद्ध्यर्थे विशिष्ट एवार्थे प्रत्ययो यत् प्रयुज्यते तत् पूर्वतरविज्ञानप्रकृत्यर्थो विशेषणादित्यङ्गीकृतं तर्हि द्वितीयस्य पदस्यान्विताभिधानं प्रथमस्य तथापि नास्तीतिचेन्न । वाक्ये पदानां प्रयोगक्रमनियमाभावात्। यदेव कदाचित् प्रथमं तदेव कदाचिद् द्वितीयमिति सर्वपदानामेवान्विताभिधानमापतितम् । अभिहितान्वयवादी च प्रकृतिप्रत्यययोरप्यन्वयव्यतिरेकाऽवधारितव्यतिरिक्तशक्तिकयोरभिहितान्वयमेव पदवदिच्छति। तथा च—

प्रकृतिप्रत्ययौ ब्रूतः प्रत्ययार्थं सहेति यत्।
भेदेनैवाभिधानेऽपि प्राधान्येन तथोच्यते ॥
पाकं हि पचिरेवाह कर्त्तारं प्रत्ययोऽन्यकः।
पाकयुक्तः पुनः कर्त्ता वाच्यो नैकस्य कस्यचिद्, इत्याह ॥

किञ्च प्रत्ययश्चेदन्विताभिधायी तदा तदविशेषात् पदानामप्यऽन्विताभिधायिता किमिति नाभ्युपेयते । किमर्थवैशसेन । यदि प्रकृतिप्रत्यययोरप्यन्विताभिधानमस्ति, न तर्हि द्वारमित्यत्रान्विताभिधानानुपपत्तिनिवन्धनाकाङ्क्षया विव्रियतां संव्रियतां वेत्यध्याहारः। उच्यते। द्वारमिति प्रथमेयं प्रातिपदिकादतिरिक्तार्थाभिधायिनी। तेनात्र केन सहेत्यस्यान्वितस्याभिधानं व्यतिरिक्तार्थे प्रत्यये प्रविशेत्यादौ योऽध्याहारः, सोऽभिहितार्थानुपपत्त्यैव विश्वजिदादिवदिति न दोषः ॥

वार्तिककारपादास्तु लाक्षणिकान् सर्ववाक्यार्थानिच्छन्तः पदार्थानामन्वयावबोधशक्तिकल्पनां निराकुर्वन्ननन्वितावस्थो हि पदा-

ऽर्थोऽभिहितोऽन्वितावस्थां स्वसम्बन्धिनीं लक्षयति । अवस्थावतो हि सम्बन्धादवस्थावत्यभिहिते भवत्येवावस्थापि बुद्धिस्था । सर्वत्र च सम्बन्धिनि दृष्टे सम्बन्ध्यन्तरे बुद्धिर्भवतीति क्लृप्तमेव । तेन नास्ति पदार्थानामन्वितबोधने शक्तिकल्पनेति । तदाहुः—

वाक्यार्थो लक्ष्यमाणो हि सर्वत्रैव हि लक्ष्यते, इति ॥

अत्रापरे ब्रुवते— नेयं लक्षणा । स्वार्थापरित्यागात् । स्वार्थपरित्यागेन हि गङ्गादिषु लक्षणा दृष्टेति । ते तु न मीमांसातन्त्रान्तःपातवैकल्येनैवमाहुः । लक्षणीयवशेन हि क्वचित् स्वार्थस्य त्यागः । सङ्ग्रहो वा सृष्टीरुपदधातीति लक्षणस्यापि स्वीकारः । गुणिनां लक्ष्यमाणत्वात् तदन्तर्गतत्वाच्च सृष्ट्यर्थस्य । तथा पौर्णमासीं यजत इत्येकवचनानुपपत्त्या पौर्णमासीशब्दो यागवचनो यागसमुदायलक्षणार्थम् । न च समुदायपरिग्रहे समुदायित्यागः । तदाश्रयत्वात् तस्य । तथेतरेतरद्वन्द्वे द्विवचनबहुवचनानुपपत्तेरर्थान्तरसहितावस्था लक्षणाऽऽश्रीयते । नचावस्थावत् परित्यागः । तथा निषादस्थपत्यधिकरणपूर्वपक्षे षष्ठ्यर्थलक्षणा स्यादित्युच्यते । न तत्र प्रकृत्यर्थस्य त्यागोऽप्यापद्यते । तथा रथघोषेणेत्यत्र रथस्यापरित्यागः तथा मेधमित्येकवचनान्तस्य गणलक्षणया मन्त्रस्य प्रकृतौ निवेशः । न च गणिनोरग्नीषोमयोस्तत्र हानमिति सर्वार्थापरित्यागेऽपि युक्तैव लक्षणा ॥

अत्रोच्यते । कथं पुनरियं लक्षणा ।

वाच्यस्यार्थस्य वाक्यार्थे सम्बन्धानुपपत्तितः ।

तत्सम्बन्धवशप्राप्तस्यान्वयाल्लक्षणोच्यते, इत्युत्तरश्लोकः ॥

गङ्गायां घोष इत्यादिषु श्रौतस्य गङ्गार्थस्य वाक्यार्थेऽन्वयासम्भवात् तं परित्यज्य तत्सम्बन्धाल्लब्धबुद्धिसन्निधेः कूलस्य वाक्यार्थान्वयिताध्यवसीयते । अत एवाहुः— अनुपपत्त्या सम्बन्धेन च लक्षणा भवति इति । इह च गामानयेत्यादौ न श्रौतस्यार्थस्यान्वयाऽयोग्यत्वं, नापि अन्वितावस्थस्यानयनसम्बन्धाङ्गता । अन्वितार्थस्यान्वयान्तरासम्भवात् । अथ मा भूदेषा लक्षणा, किन्तु क्रियावगता कारकान्वयिनीमात्मनो दशामवगमयति । अविनाभावादिति । उच्यते । शाब्दत्वं तावदित्थमपन्हुतमन्वयावगमस्य, किन्तु सामान्यतो दृष्टानुमानगोचरताभ्युपगता भवति । तथा विशिष्टान्वयावगति-

रनुपपद्यमाना निर्मूलमापद्यते । अथ विशेषान्वयं विना व्यवहारानवकल्पनादनर्थकं शब्दोच्चारणमिति तदाश्रयणम् । एवमपि प्रेक्षापूर्वकारिणां स्वार्थकवाक्यमात्रप्रयोगिणां वचनाद् विशेषान्वयावगमः । वेदे त्वानर्थक्येन न भवितव्यमिति प्रमाणाभावान्न शक्यते विशेषोऽवगन्तुम् । न च लोकेऽप्यानर्थक्यमापद्यत इत्येतावता कारणेनोपायाद्विनापि विशेषान्वयाध्यवसानं युक्तम् । न हि दग्धुकामस्योदकोपादानमनर्थकमिति जलस्य दाहशक्तिराविर्भवति । काममानर्थक्यम्। न पुनः सामान्यतो दृष्टस्य विशेषावसायिता । अथाकाङ्क्षितसन्निहितयोग्यान्वयपरता वृद्धव्यवहारे पदानामवगतेति व्युत्पत्त्यनुसारेण विशेषान्वयावगमः । तन्न । तत्र वृद्धव्यवहार एव तत्परता पदानां वा पदार्थानामुपायभावेन कथं नाम निर्वहति । चिन्ता सा हि पदानां पदार्थानां वा शक्तिकल्पनां विनाऽनुपपन्नेति मन्यामहे ॥

सा च पदानामेवेत्याह—

प्राथम्यादभिधातृत्वात् तात्पर्यावगमादपि ।
पदानामेव सा शक्तिर्वरमभ्युपगम्यताम् ॥

प्रथमभावीनि पदान्यतिलङ्घ्य नार्थेषु वाक्यार्थबोधनशक्तिराश्रयितुं युक्ता । किञ्च, पदानि तावदभिधायकानीति निर्विवादम् । तेन तेषामभिधानशक्तिःसम्प्रतिपन्नैवेति तस्या एवान्वयपर्यन्तता कल्पयितुं सुकरा । पदार्थानां तु बोधनशक्तिरेव कल्प्या । तेन धर्मिकल्पनातो वरं धर्मकल्पनेत्यन्विताभिधानशक्तिः पदानामेव कल्पयितुमुचिता । किञ्च पदान्यभिधायकानीष्यन्ते । तत्र यदि स्वरूपमात्रविषयामेव पदार्थबुद्धिमादध्युः । तदाप्यभिधायकता हीयते । तस्या बुद्धेः सम्बन्धग्रहणसमयज्ञातपदार्थबोधकसंस्कारोन्मेषप्रभवत्वात् । अवश्यं हि सम्बन्धस्मरणसिद्ध्यर्थं सम्बन्धिभूतार्थस्मरणसंस्कारोद्बोधोऽङ्गीकरणीयः । तस्मात् सम्बन्धग्रहणसमयानधिगतान्वितार्थप्रतिपादनाभ्युपगम एव शब्दानामभिधायकतेति तामङ्गीकुर्वता पदानामन्विताभिधायकताश्रयणीया । यस्तु पदमभ्यधिकाभावात् स्मारकान्न विशिष्यत इति तदा भावनावचनस्तावत् तां स्मारयति । लोकवदिति च आचार्यवचनदर्शनात् स्मारकतामेव पदानामभिधायकत्वमाह । तं प्रत्याह । तात्पर्योपगमादपीति । येनाऽपि वादिना पदानां स्मारकत्वमेव पदार्थेष्वङ्गीकरणीयं, सोऽपि

वाक्यार्थप्रतिपत्तिपरतां पदानामभ्युपैत्येव । अन्यथा वाक्यार्थस्याशाब्दत्वप्रसङ्गः। एवञ्चेत् पदानामेव साक्षाद्वाक्यार्थबोधनशक्तिरस्तु, किं परम्पराश्रयप्रपञ्चात् । तेन पदार्थेषु पदानां स्मारकत्वातिरिक्तं येऽभिधायकत्वमाहुः, तेषां शक्तित्रयकल्पना । एका तावत् पदानामभिधायकशक्तिः । अपरा च पदार्थगता अन्वयबोधनशक्त्याधानशक्तिः । पदार्थानां चान्वयज्ञापनशक्तिरिति । स्मारकत्ववादिनस्त्वभिधानशक्तिं हित्वा शक्तिकल्पनालाघवादुक्तेनैव न्यायेन पदानामेव शक्तिकल्पना न्याय्या । उचितत्वादन्विताभिधायीनि पदानीति स्थापितम् ॥

सम्प्रति पूर्वोक्तमितरेतराश्रयदोषं परिहर्तुं यथा पदेभ्यो वाक्यार्थप्रतिपत्तिस्तथा दर्शयति—

पदजातं श्रुतं सर्वं स्मारितानन्वितार्थकम् ।
न्यायसम्पादितव्यक्ति पश्चाद्वाक्यार्थबोधकम् ॥

यस्तावदगृहीतसम्बन्धः, यस्य च सम्बन्धग्रहणसंस्कारो नोत्पन्नः प्रध्वस्तो वा स वाक्यार्थप्रतिपत्तौ नाधिक्रियते । यस्त्वनवभ्रष्टसम्बन्धग्रहणसंस्कारः । स पदं श्रुत्वा नूनं तावदिदं स्मरति, इदमिदमस्याकाङ्क्षितसन्निहितयोग्यप्रतियोग्यन्वितस्य वाचकमिति । एवञ्च स्मरता स्मृतमेवानन्वितमपि स्वरूपमन्वयभाजाम् । नचैकपदश्रवणे वाक्यार्थावगतिरितिकश्चिन्मन्यते। अभिहितान्वयवादिनोऽपि हि यावत् पदान्तरमर्थान्तरं नोपस्थापयति, तावदन्वयावगमो नास्ति । पदार्थस्यान्वयावबोधिनः पदार्थान्तरापेक्षत्वात् । प्रतियोगिसापेक्षत्वादन्वयस्य । अतस्तन्मतेऽपि सर्वपदैरनन्वितस्वार्था अभिधीयमानाः पश्चात् तेभ्यः सर्वेभ्यः स्मृत्यारूढेभ्यो वाक्यार्थप्रतिपत्तिरङ्गीकरणीया ॥ तदाहुर्वार्तिककारपादाः—

तेऽपि नैवास्मृता यस्माद् वाक्यार्थं गमयन्ति नः ।
तस्मात् तत्स्मरणेष्वेव संहतेषु प्रमाणता, इति ॥

अत एव तत्रभवत आचार्यस्य वाक्यलक्षणं संहत्य अर्थमभिदधति पदानि वाक्यमिति । नन्वन्विताभिधानवादिना कथं वाक्यार्थप्रतिपत्तिः । श्रूयमाणेन हि पदेन योऽर्थो नावबोधितः, स कथमन्तर्हितेन तस्मिन्नवभासेत । उच्यते । अभिहितान्वयवादिनोऽपि नायं नियमः श्रूयमाण एव पूर्ववर्णजनितसंस्कारसहितोऽन्त्यो वर्णः पदा-

ऽर्थप्रतिपादक इति बाल्यदशाधीतत्वात्। प्रागनवधृतार्थादङ्गपरिज्ञानसंस्कारात् पश्चात् स्मृतादपि वेदार्थावगमदर्शनात्। तेन स्मृत्यारूढस्यावगमकत्वमदोषः। श्रूयमाणेन हि पदेन प्रतियोगिसापेक्षत्वादन्विताभिधानस्य प्राक् सहकारिविरहादर्थो नाभिहितः। पश्चादभिधीयत इति किमनुपपन्नम्। येऽपि वादिन एवमाहुः— एकमेव पदमन्विताभिधायकमस्तु, इतराणि च पदानि प्रतियोगिसन्निधापनमात्र एव व्याप्रियन्ताम्। न या गृह्यमाणविशेषता, प्राथम्येन प्रधानपदत्वेन वा विशेषग्रहणात्। अत एवमाहुः— प्रधानं पदं वाक्यमाद्यं पदं वाक्यमिति। तान् प्रत्याह। सर्वमिति। प्रथमस्यैव स्याद् वाक्यता यदि सर्वपदार्थानां प्रथमपदार्थान्विता स्यात्। नचायं नियमः। अरुणयैकहायन्या पिङ्गाक्ष्या सोमं क्रीणातीति क्रयमात्रान्वयित्वादारुण्यस्य। किञ्च वाक्ये पदानामानुपूर्व्यनियमाभावात् कदाचित् तदेव प्रथमं सदन्विताभिधायकम्, अन्यदा नेति न युक्तम्। तथा प्रधानपदस्यापि वाक्यत्वमयुक्तम्। सोमपदेन सह सर्वेषामनन्वयात्। यद्यप्यरुणादीनां सर्वेषां सोमं प्रत्यैदमर्थ्यमस्ति। तथाप्यस्मिन् वाक्ये क्रय एवारुण्यादीनामैदमर्थ्येन क्रियाकारकभावेन चान्वयः। क्रयद्वारेण तु सोमं प्रत्यैदमर्थ्यमात्रम्। अथ यत् प्रतिपादनपरं वाक्यं, तत् प्रधानमित्युच्यते, इह तु क्रय एव सर्वकर्मकरणावच्छिन्नः प्रतिपाद्यते। तेन क्रीणातीत्येव प्रधानं पदं, तदन्वयिता च सर्वेषामरुणादीनामिति। अत्रोच्यते। वाक्यस्य यत् तावत् तात्पर्यं तन्नव्यवस्थितम्। क्वचिदाख्यातपरत्वमेवाग्निहोत्रं जुहोतीति। क्वचिद् गुणविधिपरत्वं, दध्ना जुहोतीति। तेन प्रधानपदत्वस्यापि सर्वेषां पदानां सम्भवात् सर्वेषामेव पदानामन्विताभिधानशक्तिराश्रयणीया। तथाच सति यत्रापि गुणपरत्वम्। तत्रापि क्लृप्तशक्तिकतयान्विताभिधायकत्वमविरुद्धम्। पदार्थेष्वपि चैतत् तुल्यमेव। नन्वेवं गामानयेत्यादौ परस्परपर्यायता सर्वशब्दानां स्यात्। यथा गामित्यनेनान्विताभिधानम्। तथानयेत्यनेनापि। उच्यते। द्वावेतावर्थौ, यदानयनान्वितं गोत्वम्। गवान्वितं चानयनमिति। तेनैकैकेनैकैकस्यार्थस्याभिधानात् कुतः पर्यायत्वप्रसङ्गः। पदार्थेष्वपि चैतत् समानम्। ननु क्रीणात्यर्थस्यारुण्याद्यनेकान्विताभिधानादावृत्तिलक्षणो वाक्यभेदः स्यात्। न। तन्त्रोच्चारणाद्। वैरूप्ये च

न्वितानुपपत्तेर्वाक्यभेदः स्यात्। न्यायसम्पादितव्यक्तीति किमिदं, यावन्न्यायेन वचनव्यक्तिः सम्पाद्यते, तावत् पदजातं वाक्यार्थस्याऽवबोधकं न भवति। लोकव्यवहारानुपपत्तिभिर्न्यायैर्यावदिदं विधेयमिदमनूद्यमिदं प्रधानमिदं गुणभूतमिदं विवक्षितमिदमविवक्षितमित्यादि न सम्प्रधार्यते, तावन्न कश्चिद्वेदवाक्यार्थमवबुध्यते। तदुक्तं वार्तिककारपादैः—

तावदेव हि सन्देहो वेदवाक्ये श्रुते भवेत्।
यावन्न वचनव्यक्तिस्तस्य स्पष्टावधार्यते॥
ज्ञात्वा च वचनव्यक्तिं मीमांसान्यायकातराः।
प्रलीयन्ते समस्ताश्च वेदवाक्यार्थसंशयाः, इति॥

अत एव मीमांसाया वेदवाक्यप्रतिपत्तावितिकर्तव्यतात्वम्। तदुक्तं तैरेव—

धर्मे प्रमीयमाणे हि वेदेन करणात्मना।
इतिकर्त्तव्यताभागं मीमांसा पूरयिष्यति॥

ननु लोके द्रागेव वाक्यार्थावगतिर्नैयत्यीं सामग्रीमपेक्षते। उच्यते। अत्यन्ताभ्यस्तेषु वाक्येषु स्यादेवम्। अदृष्टपूर्वेषु स्मृत्यादिवाक्येषु लोकेऽपि नानाविधविवादोत्थानात् कुतो द्रागेवार्थनिश्चयः। अपि च कारणाभावेनापि लोकस्यायमविवेको नास्ति। तदुक्तम्—

बहुजातिगुणद्रव्यकर्मभेदावलम्बिनः।
प्रत्ययात् सहसा ज्ञाता ज्ञेयलाक्षणिकात्मकान्॥
न लोकः कारणाभावान्निर्धारयितुमिच्छति।
बलाबलादिसिद्ध्यर्थं वाक्यज्ञास्तु विविञ्चते, इति॥

यच्चेदं सर्वपदानामन्विताभिधायित्वमुच्यते, तत् सर्वेषु श्रौतार्थेषु पदेषु। लाक्षणिकगौणार्थपदप्रयोगे तु यदेव श्रौतार्थं पदं तदेवाऽन्विताभिधायकम्। इतरत्तु पदं प्रतियोगिसन्निधापनपरमेव। तत्र वाचकत्वानवधारणात् स्वार्थस्यापि तत् तदानीमवाचकम्। अन्वयाऽयोग्यत्वात्। किन्तु तदर्थेन स्मृतेन यत् स्वसम्बन्धिसदृशं वा स्वयमन्वययोग्यमुपस्थाप्यते, तेनान्वितं श्रौतार्थमेव पदं स्वार्थमभिधत्त इति दर्शनरहस्यमिदम्। न च सर्वपदान्येव लाक्षणिकानि गौणानि वा वाक्ये सम्भवन्तीति निरवद्यम्। क्वचिदभिधानं निमित्तं क्वचिदभिहितोऽर्थ इति च यदुक्तं तच्छब्दोपस्थापितताः

दर्शयितुं गौणमभिहितत्वग्रहणम् ॥

कथं पुनरन्विताभिधायिना पदेन स्वरूपमात्रेण स्मारयितुं शक्यमित्याह–

अन्वितस्याभिधानेऽपि स्वरूपं विद्यते सदा ।
तेन स्वरूपमात्रेऽपि शब्दो जनयति स्मृतिम् ॥

एवं सम्बन्धग्रहणान्तर्गतं स्वरूपस्मरणमुक्तम् । सम्प्रति स्वरूपमात्रस्मरणमपि पदादेव नानुपपन्नमित्याह–

यथार्थेनाप्रमाणेन स्वपदं स्मार्यते क्वचित् ।
पदेनाप्यप्रमाणेन तथार्थः स्मारयिष्यते ॥

न हि यत् प्रमाणं, तत् स्मरणकारणमेव प्रमाणं तत् । यस्य तु येन सह कदाचित् प्रत्यासत्तिः प्रतीतपूर्वा, सा तत्र संस्कारोद्बोधद्वारेण शक्नोत्येव स्मृतिं जनयितुम् । अस्ति च स्वरूपस्यापि तदभिधेयान्तर्गतया शब्देन प्रत्यासत्तिरिति शक्नोति । तत्रापि शब्दस्मृतिं जनयितुमर्थवत् । यथा निर्विकल्पकदशाप्रतीतमर्थस्वरूपमात्रमनभिधेयमपि शब्दं स्मारयति, तथा शब्दोऽप्यर्थमिति किमनुपपन्नमेतेन । पदोच्चारणानन्तरा पदार्थस्वरूपप्रतीतिः सदर्थिता । अभिहितान्वयवादिनोऽपि सा न प्रमाणम् । अभ्यधिकार्थपरिच्छेदाभावात् । अनधिगतार्थगन्तृ प्रमाणमिति सिद्धान्ताभ्युपगमात् । तदुक्तम्—सर्वस्याऽनुपलब्धेऽर्थे प्रामाण्यं स्मृतिरियमिति । यदि पुनः स्मृतिरेषा नाभ्युपेयेत तदा प्रमाणस्मृतिसंशयविपर्ययेभ्यः प्रतिपत्त्यन्तरानभ्युपगमात् पदात् स्वपदार्थप्रतीतिः क्वान्तर्भाव्यतामिति वाच्यम् । अत एवाभिहितान्वयवादेऽपि स्मारकत्वमेवास्मभ्यं रोचते ॥

इतरेतराश्रयमिदानीं परिहरति–

स्मृतिसन्निहितैरेवमर्थैरन्वितमात्मना ।
अर्थमाह पदं सर्वमिति नान्योन्यसंश्रयम् ॥

स्वार्थस्वरूपमात्रस्मरणे हि न पदं पदान्तरमपेक्षते । स्मृतिसन्निहितमपीदं भवत्येव सन्निहितम् । नास्ति तेनेतरेतराश्रयत्वम् । ननु वृद्धव्यवहारेण व्युत्पत्तिः । अन्वितप्रतिपत्तिनिबन्धनश्च व्यवहारः । अतस्तद्दर्शनादन्वितप्रतिपत्तिरेवानुमातुं शक्या । न त्वनन्वितपदार्थमात्रस्मरणम् । उच्यते । व्यवहारानुमितान्वितप्रतिपत्त्यन्यथानुपपत्तिरेवानन्वितस्वार्थस्मरणसम्भवे प्रमाणम् । दर्शितं ह्येतत् । नानन्वित-

प्रतिपत्तिमन्तरेणान्वितप्रतिपत्तिरुपपद्यत इति । अत्र कश्चिदाह—यदि स्मृतिसन्निहितमाश्रित्यान्विताभिधानं पदैः क्रियते, तदा स्मरणस्य प्रत्यासत्तिनिबन्धनत्वादनेकेषां चार्थानां प्रत्यासत्तिसंभवात् तेषु स्मृतिसन्निहितेष्वगृह्यमाणविशेषत्वादुखायां पचतीति नोखा पचत्यर्थान्वितैव केवलाभिधीयेत । सा हि निर्वापाद्यन्विताऽपि प्रतिपन्नैवेति स्मरणात् तदन्विताप्युखाऽभिधीयेत । तथा पचत्यर्थोऽपि पाकादिकमुखोऽवगत इति तत्स्मरणान्नौदनान्विताऽभिधीयेत । अभिहितान्वयवादे तु नायं दोषः । एकैकस्यार्थस्याभिधेयत्वादिति ॥

अत्रोच्यते । पदात्तावत् पदार्थप्रतीतिः स्मरणाद् भिन्ना वदितुं न शक्यते । तेन स्मृतानामेवान्वयबोधकत्वमित्याश्रयणीयम् । तथा च तुल्यो दोषः । अथ शब्दैः स्मारितानामन्वयबोधकत्वाद् वृद्धव्यवहारे तथा दर्शनाददोषः । मतान्तरेऽपि तुल्यमेतत् । नचायमेकान्ततः । वृद्धव्यवहारेऽध्याहृतेनाप्यर्थेनान्विताभिधानदर्शनादित्युक्तम् । अथ शब्दैर्बहवोऽर्था स्मार्यन्ते, किन्तु तेषां कतमेनान्वयावबोधकत्वमिति । अभिहितान्वयवादे त्वभिहितेनान्वयबोधकत्वं युक्तमेवेति । तदसत् । स्मारकत्वातिरेकिणी का अन्याऽभिधायकता या व्यवस्थानिबन्धनम् । अथोच्येत । स्मारकत्वं नाम प्रत्यासत्तिनिबन्धनम् । तेन तदतिरेकिणी अभिधेयाभिधायकतालक्षणा प्रत्यासत्तिरङ्गीकरणीयेति । नैतदेवम् । स्मारकत्वेनैव वृद्धव्यवहारे दर्शनात् । स्मारकत्वोपपत्तेः प्रत्याययेयुः । प्रत्यायकता हि वाच्यवाचकता, सा च यद्यप्यग्निधूमाऽऽदीनां सम्बन्धान्तरापूरिका दृष्टा, तथापि शब्दे तथा नाश्रीयते । किन्तु वाचकत्वावगमादेव वाचकत्वम् । एवं स्मारकत्वावगमादेव स्मारकत्वमिति, किं प्रत्यासत्त्यन्तराश्रयणेन । अपि चान्वितार्थवादिन एवेदं प्रतिनियतान्वयत्वमुपपद्यते यत् पदार्थान्तरान्विताभिधायकतया स्मार्यते । तदन्वितस्यैव वृद्धव्यवहाराऽवार्यत्वदर्शनात् । यत्राऽप्यध्याहारः, तत्रापि सन्निधापकवशेन विशेषान्विताभिधानलाभ इति लोकत एव ज्ञातमिति न कश्चिद् दोषः । ज्ञातं तावदेतद् यदनेन पदेनान्वितो वार्थ इति । यद्यन्येनाप्यन्विताभिधानं स्यात्, तदा वाक्यभेदो भवेत् । न चासावेकवाक्यत्वसम्भवे न्याय्यः । तदुक्तम्—

सम्भवत्येकवाक्यत्वे वाक्यभेदश्च नेष्यते, इति ॥

अत एव यथाकथञ्चिदेकवाक्यत्वोपपत्तौ वाक्यभेदस्यान्याय्यत्वात्। लोके लक्षणा गौणी च वृत्तिर्वाक्यभेदादेव। अन्यथा वाक्यं भित्वा किमित्यध्याहृत्य योग्यमर्थान्तरं सर्वदान्येव मुख्यार्थानि नाश्रीयन्ते। वेदेऽप्येकवाक्यत्वबलादेवार्थवादेषु गुणवादाच्चाश्रयणं विभक्तिव्यत्ययवर्णनम्। औदुम्बराधिकरणे वा कथञ्चित् पशुवाचकत्वम्। चित्राधिकरणे रूढिपरित्यागेन पञ्चदशान्याज्यानि भवन्तीतिवत् कथञ्चिन्नामधेयत्वाश्रयणम्। वाजपेयाधिकरणे च वाक्यभेदभयादेव नामधेयत्वाश्रयणम्। पौर्णमास्यधिकरणे चानेकगुणविधाने वाक्यभेदापत्तेः समुदायानुवादकत्वसिद्धिः। प्रकरणान्तराधिकरणे च वाक्यभेददोषादेवाग्निहोत्रपदस्य गौणवर्णनम्। ग्रहाधिकरणे चैकत्वस्याविवक्षितत्वम्। अर्द्धमन्तर्वेदि मिनोत्यर्द्धं बहिर्वेदीत्यत्र देशलक्षणावत्त्वम्। क्षौमाधिकरणे च पुंद्वयविधानहानम्। आकृत्यधिकरणे चोभयपदस्याविवक्षा। वारुण्या निष्कासेन तुषैश्चेत्यत्र निरपेक्षत्वत्यागः। पर्युदासाधिकरणे च नञर्थस्य लाक्षणिकत्वमित्यादि बहुतरं दृश्यते। तत्र यदि व्याह्रियमाणस्य पदस्याभिधेयं परित्यज्यान्येन सहान्वयो लक्ष्यते, तदाप्येकवाक्यता हीयेत। तदर्थमेवेदमुक्तं, न्यायसंवादितव्यक्तीति॥

एकवाक्यत्वं हि नाम महान्वयः। तदनुसारेण योऽर्थः, सोऽत्र वाक्यस्याश्रयणीयः। वृद्धव्यवहारव्युत्पत्तियन्त्रितायां शब्दार्थावगतौ ये न्याया वृद्धव्यवहारे वाक्यर्थावगतिहेतुतया विदिताः,तानपरिजहता वाक्यार्था बोद्धव्या इतिसर्वासामेवानुपपत्तीनामनवकाशः। भवतु तर्हि पदार्थान्तरेण तावदन्विताभिधानमेकवाक्यत्वबलात् तत्स्मारितेन स्वयं स्मारितेन च तदेकवाक्यत्वानुगुणेनार्थान्तरेणापि किमित्यन्विताभिधानं न भवति। उच्यते। पदद्वयेनैवान्विताभिधानसिद्धेराकाङ्क्षोपशान्तेः। अथ नोपशान्ताकाङ्क्षा, तर्हि को नाम तन्नान्विताभिधानं वारयेत्। अत एवैकपदोच्चारणे तदर्थसम्बन्धमुखेन बहुष्वपि स्मृतिसन्निहितेषु यस्यार्थस्य केनचित् प्रकारेण विशेषो गृह्यते, तेनैवान्विताभिधानम्। अगृह्यमाणे तु विशेषेऽनध्यवसायादप्रतीतिरेव।अत एव विकृतिषु तत्सादृश्येन यत्पूर्वं स्मर्यमाणं स्वोपकारकं स्मारयति तदीयेनैवोपकारेण परिपूरणम्। अतो यत्र बहुतरधर्मसाधारण्यनिबन्धनं सादृश्यमन्यस्योद्भूतम्, तत्रैव शीघ्रं

स्मृत्युपपत्तेस्तदीयोपकारकपरिग्रह एव । दर्विहोमेषु तु सर्वापूर्वाणामविशेषाद् विशेषो ग्रहीतुमशक्य इत्यनध्यवसाय एव प्राकृतस्योपकारस्येति तत्रैवोपकारकताऽपि। यथा वृद्धव्यवहारावगमं वाक्यार्थावबोधः । तत्र यदेव पदेन अनवभ्रष्टसम्बन्धग्रहणसंस्कारस्य पुरुषस्य नियमेन स्मार्यते । तेनैवान्विताभिधानं पदान्तरस्य दृश्यते, नान्येन । स्वार्थं हि सर्वं पदं नियमेन सम्बन्धस्मर्तॄणां स्मारयति, नार्थान्तरम् । ततश्च तेनैव पदान्तरस्यान्वितस्वार्थबोधकतेति न कश्चिद् दोषः । किञ्च यद्यभिहितेनैवान्वितस्वार्थबोधनाभ्युपगमे प्रतिनियतान्वयबोधो घटते, नान्यथा, तर्हि कल्प्यतां पदानामनन्विताभिधानशक्तिरपि । द्विरभिधानमेवापद्यत इति चेदापद्यतां, न कश्चिद् दोषः । पूर्वं केवलं पदमनन्वितस्वार्थमभिधत्ते । प्रतियोगिपदान्तराभिहितवस्त्वन्तरसहायप्राप्त्या तु तत्तदन्वितमर्थमाह इति न कश्चिद् दोषः ॥

इत्थमपि चास्मन्मते शक्तिकल्पनालाघवमस्ति । पदार्थगतान्वयबोधनशक्त्याधानशक्तिकल्पनात्यागः । तुल्यायामपि शक्तिकल्पनायां पदानामेवान्वितबोधनशक्तिराश्रयितुमुचितम् । न पदार्थानां प्रथमाऽवगतत्वाद्वाक्यार्थे च तात्पर्यस्यावगतत्वादिति ॥

कथं तर्हीदं भाष्यं, पदानि हीत्यादि । तत्राह—

अन्वितेषु पदैरेव बोद्ध्यमानेषु शक्तिभिः ।
अन्वयार्थगृहीतत्वान्नान्यां शक्तिमपेक्षते ॥

आशङ्कितोत्तरमिदं भाष्यम् । किमाशङ्कितम् । यद्यन्विताभिधायीनि पदानि तर्हि नान्वयाभिधायीनि । तत्सिद्ध्यर्थं पदानां शक्त्यन्तरं कल्प्यमिति । अत्रेदमुत्तरम् । यत् पदमन्विताभिधायकम् । अन्यथान्वित एवासौ, नाभिहितः स्यादित्यन्वितरूपेणार्थेनान्वयः स्वीकृतः । तं विना तदसम्भवादिति नापरा तद्विषया पदानां शक्तिः कल्पनीया ।

कथं पुनरसावर्थगृहीत इत्याह—

प्रतीयन्नन्वयं यस्मात् प्रतीयादन्वितं पुमान् ।
व्यक्तिजातिमिवार्थोऽसाविति सम्परिकीर्त्यते ॥

अन्वयवानेव ह्यन्वितः । सोऽन्वयाप्रतीतौ न प्रतीत एव स्यात्, किन्तु स्वरूपमात्रमेव । न च तदन्वितमुच्यते । तस्मात् तदन्वयं

प्रतिपाद्यमानोऽन्वितं यं प्रतिपाद्यते । यथा व्यक्तिं प्रतिपद्यमानो जातिम् । अयं तु विशेषः । अन्वयवानेवान्वित उच्यत इत्यन्वयोऽप्य-ऽभिधानानुप्रविष्टः । व्यक्तिमत्त्वैव जातिस्वरूपं न भवति । किन्तु व्यक्तेराकारभूता जातिस्ततो भिन्ना । सा चेदाकृतिः शब्दाभिधेया न व्यक्तिशक्तिरभिधानानुप्रवेशिनी, किन्तु आकारभूता जातिव्यति-रिक्ताऽपि वस्तुस्वभावेन व्यक्तिमन्तरेण प्रतीतिमनुभवति । एतावता च साम्येन, दृष्टान्तो न सर्वात्मना ॥

नन्वेकविज्ञानारूढा कथं व्यक्तिरनभिधेया । शब्दोत्थापितवि-ज्ञानविषयता ह्यभिधेयता । अस्ति च व्यक्तेरपि तथाभाव इति । कथमनभिधेयतेति श्रूयतामवधानेन सर्वस्वं प्राभाकराणाम् । सत्य-मेकसंवित्तिविषयता जातिव्यक्त्योः । तथापि चिन्तनीयमिदम् । कथमेषा संवित्तिरुभयविषया जायत इति । किमस्योभयविषयत्वे शब्दमात्रस्यैव व्यापारः ? उत जातिमात्रविषयत्वे शब्दस्वरूपमात्रेण व्याप्रियते । व्यक्तिविषयत्वे जात्यभिधायकतया जातेरन्यथा बोध-यितुमशक्यत्वादिति । तावदनन्तासु व्यक्तिषु सम्बन्धग्रहणाशक्ते-राकृत्युपलक्षितासु च । यद्यपि सम्बन्धग्रहणं सुकरं, तथापि तद्रूप-त्वेनैव शब्दशक्त्यवगमात् । उपलक्षणत्वे कारणाभावात् । चिह्नभावेन च क्रियान्वयासम्भवादाकृतिविषयत्वं तावच्छब्दस्वरूपनिबन्धन-म् । एवञ्चेत् तदभिधायकतयैव व्यक्तिविषयत्वे शब्दव्यापार इति निश्चीयते । तेनाकृतिर्न व्यक्तिं गमयति । किन्तु शब्द एव तदभिधा-यकतयेति । आकृतितो व्यक्तिरुच्यते । अतोऽन्विताभिधानायान्वय-स्यार्थगृहीतत्वादसावन्वयो नाभिधीयते । तेन व्यतिषिक्ताभिधानं वदन्न व्यतिषङ्गाभिधानं, निष्कृताधानं न भवति । व्यतिषक्ततोऽव-गते व्यतिषङ्गस्य व्यतिषङ्गं विनाभिधानानुपपत्तेः । भाष्याक्षराणामय-मर्थः । पदान्यन्वितमभिधाय निवृत्तव्यापाराणि नान्वयं पृथगभि-दधति । अथेदानीमन्विताः प्रतिपन्ना अन्वयमपि प्रतीतं संपादयन्ती-ति । लोके च पदार्थानां सम्बन्धग्रहणसमय एव विदितत्वाद्वाक्या-न्तरे चान्वयान्तरस्यैव प्रतिपन्नत्वात् तत्परतैव वाक्यस्येति वाक्या-ऽर्थशब्देन भाष्यकारोऽन्वयमाह । वेदे त्वपूर्वत्वाद् वाक्यार्थ इति वक्ष्यामः । तस्य च स्वरूपमप्यनवगतमित्यन्वयस्यैव वाक्यार्थत्वात् । एवमुक्तेन न्यायेन विशेषणैवान्विताभिधानं समर्थितम् ॥

येऽन्विताभिधान एवमाहुः— वृद्धव्यवहारो प्रसिद्धसम्बन्धः शब्दोऽर्थस्य वाचकः । अन्वयव्यतिरेकाभ्यां च सम्बन्धावधारणम् । न च विशेषान्वयविषयौ तौ सम्भवतः। क्रियापदं हि कारकसामान्यव्यभिचारिण्या क्रियया सहान्वयव्यतिरेकौ भजते । विशेषान्तरान्वयव्यभिचारात् । एवं कारकपदेऽपि योज्यमिति ।

तन्निराकरणायाह—

सामान्येनान्वितं वाच्यं पदानां ये प्रचक्षते ।
नियतेन विशेषेण तेषां स्यादन्वयः कथम् ॥

दर्शितमिदं विशेषान्वयेऽप्याकाङ्क्षासन्निधियोग्यतोपाधिवशेन सम्बन्धग्रहणं सुकरमिति तदभिधायकतैव युक्ता पदानाम् । यदि चासौ नेष्यते, तदा वाक्यार्थप्रतिपत्तिरेव नोपपद्यते । विशेषान्वयरूपत्वाद्वाक्यार्थस्य ॥

ननु च सामान्यान्वयोऽभिहितो विशेषान्वयमाक्षेप्स्यतीति । निर्विशेषस्य सामान्यस्य प्रत्येतुमशक्तेरिति विशेषान्वयप्रतिपत्तिरुपपन्नैवेत्यत्राह—

यद्यप्याक्षिप्यते नाम विशेषो व्यक्तिजातिवत् ।
निर्धारितविशेषस्तु तद्वदेव न गम्यते ॥

यथा जातिर्व्यक्तिमाक्षिपत्यपि न प्रतिनियतं विशेषमाक्षिपति, तथात्राऽपि प्रतिनियतविशेषाभावान्नियतविशेषात्मकवाक्यार्थप्रतिपत्तिरनुपपन्नैव ॥

अथ विशेषमात्राक्षेपेऽप्याकाङ्क्षितसन्निहितयोग्यश्च विशेषः पदान्तरेण समर्प्यते,स एव गृह्यते । तदतिरिक्ते प्रमाणाभावादित्याह—

यद्याप्याकाङ्क्षितो योग्यो विशेषः सन्निधौ श्रुतः ।
सम्बन्धबोधकाभावो गृह्यते न तथाप्यसौ ॥

सामान्यान्विताभिधानवादिनो मते पदानि तावत् तन्मात्र एव पर्यवसितशक्तीनि । पदार्थानामप्यन्वयबोधनशक्तिर्नाङ्गीक्रियते । न च सामान्याक्षेपोऽपि नियतविशेषमास्कन्दति । तेनाकाङ्क्षितेऽपि योग्ये च विशेषे पदार्थान्तरेण सन्निधापितेऽपि तदन्वयबोधकप्रमाणाभावात् तदन्वयो न प्रतीयेतैव । अत आकाङ्क्षासन्निधियोग्यत्वादीन्यनुपयोगीन्येव । विशेषान्वयवादिनस्तु मते सम्बन्धग्रहणं प्रत्युपाधित्वेन प्रविष्टानि वाक्यार्थप्रतिपत्तावुपयुज्यन्ते । तदाह—

सम्बन्धबोधव्युत्पत्तावुपाधित्वे समाविशेत्।
विशेषान्वयवादे तु योग्यत्वाद्युपकारकम् ॥

पदानां पदार्थान्तरसम्बन्धः स्वार्थो बोध्य इत्यस्यां व्युत्पत्तावुपाधित्वेन योग्यत्वादिकमनुप्रविशेत्। विशेषान्विताभिधानवादिपक्षे उपकारकं न सामान्यान्विताभिधान इति दर्शितं प्राक् ॥

दूषणान्तरं चाह—

किञ्च वस्तुबलेनैव सिद्धे सामान्यसङ्गमे।
तस्या वाच्यत्वमिच्छद्भिर्वृथा शब्दः प्रवेशितः ॥

क्रियाकारकस्वभावालोचनयाऽपि कारकमात्रेण क्रियामात्रेण चाऽन्वयावगमसिद्धेर्वृथा सामान्याऽन्वयाभिधायकता शब्दस्याङ्गीक्रियत इति ॥

वाक्यमेकं न निर्भागं वाक्यान्त्योऽवयवोऽपि वा।
पदवृन्दं स्मृतिस्थं वा प्रथमं पदमेव वा ॥
आख्यातपदमात्रं वा पदार्था वाप्यनन्विताः।
सामान्यान्वयबोधे यो हेतुर्वाक्यार्थबोधने ॥
पदान्येव समर्थानि वाक्यार्थस्यावबोधने।
विशेषान्वयवादीनि भागशो भागशालिनः, इति सङ्ग्रहश्लोकाः ॥

तथाचोक्तम्। अस्ति वा पदस्यार्थः। बाढमस्ति। कथं तर्हि वाक्यवाक्यार्थयोरौत्पत्तिकत्वम्। वृद्धव्यवहारात्। सत्यम्। स त्ववयववश इत्युक्तम् ॥ इति श्रीमहामहोपाध्यायशालिकनाथमिश्रविरचितायां वाक्यार्थमातृकावृत्तौ उपोद्घातपरिच्छेदः प्रथमः ॥ १ ॥

## अथ द्वितीयः परिच्छेदः ॥ २ ॥

उपोद्घातभूतमन्विताभिधानं प्रसाध्यापूर्वं कार्यं वेदवाक्यानामस्तीति साधयितुकामः पूर्वपक्षं तावदाह—

नन्वु व्युत्पत्त्यपेक्षेषु शब्देष्वर्थाभिधायिषु ।
कथं मानान्तरावेद्यं कार्यमाहुर्लिङादयः ॥

अपूर्वाधिकरणे लिङाद्यर्थोऽपूर्वमित्युक्तम् । प्रमाणान्तरायोग्यं चापूर्वमिष्यते । यच्च प्रमाणान्तरायोग्यं तत्र सम्बन्धग्रहणमशक्यम् । सम्बन्धिग्रहणपूर्वकत्वात् । तस्य विशिष्टार्थव्यवहारदर्शनेनैतद्विषया शब्दशक्तिरनुमीयते । तदेव च सम्बन्धग्रहणम् । यत्र न प्रतीतौ तद्विषयो व्यवहारोऽवसीयते । तदनवसायेन च तद्विषया बुद्धिरनुमीयते । तदनुमाने च कुतः शब्दस्य शक्तिः कल्प्यते । अपूर्वं च न प्रमाणान्तरगोचरः । न च शब्दादेव तदवगम्य सम्बन्धाऽवधारणम् । इतरेतराश्रयत्वात् । अवसितशक्तेरेव बोधकत्वात् । अवबोधकत्वादेव शक्त्यवगमात् । स्यान्मतम् । लिङादेः शब्दस्याऽयं महिमा,यदनवसितशक्तिरपि स्वार्थमवगमयतीति।तदिदमप्रमाणम् । क्रियामात्रकार्याऽवबोधकत्वाङ्गीकारेण लिङादेर्लोकतो व्युत्पत्तिसम्भवे शब्दान्तरवैलक्षण्येनागृहीतसम्बन्धस्यैव वाचकत्वकल्पनानुपपत्तेः । वेदवाक्यादपूर्वकार्यावगतेरेवं कल्प्यत इतिचेन्न । तस्या एवासिद्धत्वात् । क्रियैव कार्यतया वेदवाक्येभ्योऽवगम्यत इति व्युत्पत्तिबलेन प्रामाणिकं मनोरथमात्रविजृम्भितत्वपूर्वं कार्यं प्रतीयत इति । तस्मादगृहीतसम्बन्धो लिङादिः कथमपूर्वं कार्यमभिधत्ते । तथाच कथं वाक्यार्थः । अभिधेय एव ह्यर्थोऽभिभवति । एवं,

शब्दान्तराण्यपि कथं तेनादृष्टेन कुत्रचिद् ।
वदिष्यन्त्यन्वितं स्वार्थं व्युत्पत्तिपथदूरगम् ॥

तस्मिन्नप्रतीयमाने तदन्वितस्याप्रतीतेः सूत्रसंबन्धावधारणानुपपत्तेर्दूरनिरस्तं शब्दान्तराणां तदन्वितस्वार्थबोधकत्वमिति ॥

राद्धान्तमुपक्रमते—

अत्रोच्यते यदा नाम वृद्धेनैकेन भाषिते ।
जलं चैत्राहरस्वेति चैत्र आहरते यदा ॥
तदा व्युत्पित्समानोऽन्यस्तत्रैवमवगच्छति ॥

बुद्धिपूर्वा प्रवृत्तिरियमीदृशी। लिङादियुक्तवाक्यश्रवणात् प्रयोज्यवृद्धस्य विशिष्टार्थविषयां प्रवृत्तिं दृष्ट्वा व्युत्पित्समानो बाल एवमाकालयति। येयं स्वाधीनास्य प्रवृत्तिः, सा मद्वद् बुद्धिपूर्विकेति। पुनश्च तस्यायं विमर्शो जायते। अहं बुद्ध्वा प्रवृत्तो यत् तदेषोऽपि। यस्याः प्रवृत्तेर्हेतुभूता बुद्धिः, सा यद्विषया सती मम प्रवृत्तिहेतुः, तद्विषयैवास्यापीति व्युत्पित्सोरनुमा जायते। तदेवमनुमानद्वयमेतद् वृद्धस्य स्वतन्त्रा प्रवृत्तिधर्मिणी बुद्धिपूर्विकेति साध्यो धर्मः। स्वतन्त्रप्रवृत्तित्वात्। मदीयस्वतन्त्रप्रवृत्तिवदिति। तथा वृद्धस्य प्रवृत्तिहेतुभूता बुद्धिधर्मिणी यद्विषया बुद्धिर्मम प्रवृत्तिहेतुभूता, तद्विषयैवास्यापीति साध्यो धर्मः। प्रवृत्तिहेतुभूतबुद्धित्वात्। मदीयप्रवृत्तिहेतुभूतबुद्धिवत्। पुनश्च तस्यायं विमर्शः प्रवर्त्तते। पदस्य तु शब्देन बोध्यते। अनेन मम मानान्तरेण तु यद्विषया सा बुद्धिः प्रवृत्तिहेतुभूता, तद्वत् स्वस्यानेन शब्देन बोध्यते। तद्भावे सति अवगमात्। मम तु मानान्तरेण तद् बोध्यते इत्ययमावयोर्विशेषः। येन यद् बुद्ध्वा प्रवृत्तिर्मम तदस्यानेन शब्देन बोध्यते इति शब्दस्य प्रवृत्तिहेतुभूतार्थावबोधकतामवधारयति॥

पुनश्च कोऽसौ प्रवृत्तिहेतुभूतोऽर्थः शब्दाभिधेय इति निर्धारयितुं स्वात्मनि प्रतिपन्नं प्रवृत्तिहेतुभूतमर्थमनुसन्धत्ते—

तत्र बुद्ध्वा प्रवृत्तोऽहं किं तावत् स्वयमन्यदा॥

शब्दनिरपेक्षः स्वयमहं प्रवर्त्तमानः किं बुद्ध्वा प्रवृत्त इति जिज्ञासते। अन्यदेत्यनेन व्युत्पत्तितः प्रागवस्थोच्यते। अव्युत्पन्नेन बालेन यदात्मनि प्रतीतिकारणतया प्रतीतं, तदेव व्युत्पन्नस्यापि तेन कल्प्यते, नान्यदित्यर्थः। तेन शब्द एव प्रवृत्तिहेतुभूतो विधिस्तद्व्यापारो वेति निरस्तं भवति। तयोर्बालेनात्मनि प्रवृत्तिकारणत्वेन दर्शनात्। अतिमन्दतया चेमौ पक्षौ न साक्षादुपन्यस्य निरस्तौ। तथाहि। लिङादिशब्दस्वरूपस्य प्रवर्त्तकत्वे सर्व एव तच्छ्राविणो नियमेन प्रवर्त्तेरन्, नचैवं दृश्यते, कस्यचित् कदाचित् प्रवृत्तिः। लिङादिव्यापारस्य तु प्रवृत्तिहेतुत्वाश्रयणं देवाः प्रतिपद्यन्ताम्। पिशितचक्षुषो मानुषा वयं नेयतीं प्रमाणभूमिमवगाहितुं क्षमाः॥

शब्दभावना लिङादिव्यापाररूपा पुरुषप्रवृत्तिभवनानुकूला स्वज्ञापितकरणिकार्थवादोदितप्राशस्त्यलक्षणेतिकर्त्तव्यतायोगिनीप्रेरणा-

ऽऽत्मिका कल्प्यते । स्वाध्यायाध्ययनविधिना हि सर्वे विधायकाः स्वाध्यायशब्दवाच्याः स्वात्मा च नियुज्यन्ते भावयेदिति । तत्र किमित्यपेक्षायां पुरुषप्रवृत्तिः सम्बद्ध्यते। केनेत्याकाङ्क्षायां विधिज्ञानमेव योग्यतया करणत्वेनाङ्गीक्रियते । ज्ञाता हि शब्दभावना प्रवृत्तिं प्रसूते, योग्यतयैवार्थवादसमुत्थप्राशस्त्यज्ञानमितिकर्त्तव्यतांशे निविशते । अवसीदन्ती हि विधिशक्तिः प्राशस्त्यज्ञानेनोत्तभ्यत इति तस्याः पुरुषव्यापाररूपस्वर्गादिभाव्यावच्छिन्ना भावार्थकरणिका श्रौतस्मार्त्ताचारप्राप्तपदार्थावगमजनितकरणोपकारवती अर्थभावना समानप्रत्ययवाच्या विषयभूता । तत्र लिङादेस्तादृशो व्यापारो विद्यत इत्यत्र, न किञ्चन प्रमाणम् । लिङादिशब्दानन्तरभाविनी प्रवृत्तिरेव प्रमाणमिति चेन्न । तन्निबन्धनत्वेन प्रवृत्तेरन्यत्रादृष्टत्वात् । तन्निबन्धना हि प्रवृत्तिर्दृष्टा। तदेव तां दृष्ट्वा शक्यमनुमातुम् । न पुनरप्रतिपन्नपूर्वकारणभावं शब्दव्यापारविशेषः ॥

प्राचीनदुर्लभग्रन्थसमुद्धरणबद्धपरिकर-श्रीयुतगोविन्ददासमहाशय-संपादितपुस्तकाधारेण पूरितेयं प्रकरणपञ्चिकात्रुटिः । पृष्ठम् । १७१ ।

